TRIVANDRUM SANSKRIT SERIE

NO. XVI.

THE

# PRATIJNÂYAUGANDHARÂYAṆA

OF

BHÂSA

EDITED WITH NOTES

BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts.*

TRIVANDRUM.

Bhasa's Works:—No. 2.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1912.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १६.

# प्रतिज्ञायौगन्धरायणं

महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे द्वितीयम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२.

# PREFACE.

This *Rûpaka* is styled, in the manuscripts as *Pratijnâyaugandharâyana* or *Pratijnânâtikâ*. There are three such manuscripts which form the basis of its publication; one of them, obtained from the *Manalikkara Matham* is designated क, the other obtained through Pandit *A. Anantâchârya* is designated ख, and the third from *Thalaman Matham* ग. The differences in reading between the first two are noted at the foot of the page. The third manuscript ग was obtained only after the book was printed; hence the differences in reading noticeable therein are printed separately (at the end of the book). An old manuscript styled '*Mantrânkavyâkhyâna*' was obtained from the Palace Library, which contains a short commentary on some portions of the third Act of *Pratijnâyaugandharâyana*. It seems to me that the third Act must have been styled *Mantrânka* as the leading subject-matter thereof is the ministers' advice. Though the commentary is not free from defects, it may be of some value to those who may ascribe different interpretations, and is hence added at the end of the book.

Trivandrum. T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

अस्य रूपकस्य '**प्रतिज्ञायौगन्धरायणम्**' इति '**प्रतिज्ञानाटिका**' इति चादर्शेषु संज्ञोपलभ्यते । अस्य मुद्रणाधारभूतास्त्रय आदर्शाः । तत्रैकः क. संज्ञो **मणलिक्करमठीयः**, अन्यः ख. संज्ञः आ. सूरि. **अनन्ताचार्य**पण्डितसम्बन्धी, अपरो ग. संज्ञः **तालमण्**मठीयः । तत्राद्ययोः पाठभेदास्तत्तत्पृष्ठेषु निवेशिताः । ग. संज्ञस्य तु मुद्रणानन्तरमुपलब्धस्य पाठभेदाः पृथङ् निवेशिताः । **प्रतिज्ञा-यौगन्धरायण**तृतीयाङ्कैकदेशस्य किञ्चिद् व्याख्यानं '**मन्त्राङ्कव्याख्यानम्**' इति कृतव्यपदेशं वयस्वितालपत्रसंपुटकात्मकं राजकीयग्रन्थशालात उपलब्धम् । तत्तृतीयाङ्को, मन्ये, मन्त्रिमन्त्रितप्रधानत्वाद् मन्त्राङ्को व्यवहृतः । तदेतदस्य व्याख्यानमनतिशुद्धमपि गूढार्थकल्पनप्रणयिनां किञ्चिदुपकारकं स्यादिति पुस्तकान्ते योजितम् ।

अनन्तशयनम्.

त. गणपतिशास्त्री.

# पात्राणि ।

---

पुरुषाः—

यौगन्धरायणः = उदयनस्य मन्त्री ।

उन्मत्तकः = तद्वेषो यौगन्धरायणः ।

श्रमणकः = तद्वेष उदयनस्य मन्त्री रुमण्वान् ।

विदूषकः = वसन्तकनामा उदयनस्य नर्मसचिवः ।

ब्राह्मणः = प्रच्छन्नो यौगन्धरायणस्य पुरुषः ।

हंसकः = उदयनसमीपवर्ती कश्चिदुपाध्यायः ।

गात्रसेवकः = यौगन्धरायणस्य पुरुषो वासवदत्तागृहे प्रच्छन्नो हस्तिपकः ।

सालकः = यौगन्धरायणस्य पुरुषः ।

निर्मुण्डकः = यौगन्धरायणगृहे प्रतीहारः ।

महासेनः = उज्जयिनीपतिर्वासवदत्ताजनकः प्रद्योतो नाम ।

भरतरोहकः = महासेनमन्त्री ।

बादरायणः = महासेनस्य काञ्चुकीयः ।

भटः = वासवदत्ताया भृत्यः ।

साधारणौ = भरतरोहकस्य पुरुषौ ।

स्त्रियः—

देवी = अङ्गारवती नाम महासेनस्य महिषी ।

विजया = यौगन्धरायणगृहे प्रतिहारी ।

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# प्रतिज्ञायौगन्धरायणम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

*पातु वासवदत्तायो महासेनोऽतिवीर्यवान् ।
वत्सराजस्तु नाम्ना सशक्तिर्यौगन्धरायणः ॥ १ ॥

(परिक्रम्य नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी—**(क) अय्य! इअह्मि ।

**सूत्रधारः—**आर्ये! गीयतां तावत् किञ्चिद् वस्तु । ततस्तव गीतप्रसादिते रङ्गे वयमपि प्रकरणमारभामहे । आर्ये! किमिदं चिन्त्यते । ननु गीयते ।

---

(क) आर्य ! इयमस्मि ।

---

* पात्विति । वासवस्य दत्तः अयः शुभावहो विधिर्येन स तथा । नाम्ना तु वत्सराज इति संबन्धः, विनायको ह्यस्य भ्राता ज्येष्ठराज इति श्रुतः 'ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते' इति । अत्र नाटिकायां नायिका वासवदत्ता, तत्पिता महासेनः, नायको वत्सराज, तन्मन्त्री यौगन्धरायण इत्येषां प्रधानपात्राणां नामानि मुद्रालङ्कारभङ्ग्या निर्दिष्टानि। स च वत्सराजः स्वत्र फलभोक्तृत्वमात्रेण स्थितः, क्रियाभारवाहित्वं तु तत्प्रसादलब्धप्रभुशक्तेर्यौगन्धरायणस्यैवेति नामपदशक्तिपदाभ्यां गम्यते ।

**नटी** — (क) अज्ज! मए सिविणे णादिकुळस्स अस्सत्थं विअ दिट्ठं। ता इच्छामि अय्येण कुसळविण्णाणीणमित्तं कञ्चि पुरुसं *पेक्खिदुं[1]।

**सूत्रधारः** — बाढम्।

पुरुषं प्रेषयिष्यामि व्यक्तमात्महिते क्षमम्।

(नेपथ्ये)

सालक! सज्जस्त्वम्।

**सूत्रधारः** —

पुरुषं प्रेषयत्येष यथा यौगन्धरायणः॥ २॥

(निष्क्रान्तौ)

स्थापना[2]।

---

(ततः प्रविशति यौगन्धरायणः सालकेन सह)

**यौगन्धरायणः** — सालक! सज्जस्त्वम्।

**सालकः** — (ख) अय्य! अहइं।

**यौगन्धरायणः** — महान् खल्वध्वा गन्तव्यः।

---

(क) आर्य! मया स्वप्ने ज्ञातिकुलस्यास्वास्थ्यमिव दृष्टम्। तदिच्छाम्यार्येण कुशलविज्ञाननिमित्तं कञ्चित् पुरुषं प्रेक्षितुम्।

(ख) आर्य! अथकिम्।

---

१. 'पेक्खिआस्सिदुं (?)' ख. पाठः. २. 'आमुखम्।' ख. पाठः.

---

* 'पेसिदुं' इति स्यात्।

**सालकः[1]** — (क) महत्तरेण सिणेहेण अय्यं उवच्चिट्ठामि ।

**यौगन्धरायणः** — हन्त यास्यति, बलवान् यस्य सहार्थः। कुतः,

स्निग्धेष्वासज्यं कर्म यद् दुष्करं स्याद्
यो वा विज्ञाता सत्कृतानां गुणानाम् ।
क्रीतं सामर्थ्यं यस्य तस्य क्रमेण
दैवप्रामाण्याद् *भ्रश्यते वर्धते वा ॥ ३ ॥

अथ वेणुवनात्[2] त्रिषु गहनेषु नागवनं श्वः प्रयाता स्वामी प्रागेव सम्भावयितव्यः ।

**सालकः** — (ख) अय्य ! ळेहो[3] खु मं ओवज्झइ, जहिं आअत्तं कय्यसरीरं ।

**यौगन्धरायणः** — विजये !

(प्रविश्य)

**विजया** — (ग) अय्य! इअह्मि ।

**यौगन्धरायणः** — विजये! त्वर्यतां लेखः प्रतिसरा च ।

**विजया** — (घ) अय्य! तह । (निष्क्रान्ता)

---

(क) महत्तरेण स्नेहेनार्यमुपतिष्ठे ।

(ख) आर्य ! लेखः खलु मामपवहति, यस्मिन् आयत्तं कार्यशरीरम् ।

(ग) आर्य! इयमस्मि ।

(घ) आर्य! तथा ।

---

१. 'कः– अय्य ! म' ख. पाठः. २. 'नाश्रितेषु' ख पाठः. ३. 'तुहो खु मय्यो पंछ जहि आयतक्केअसरीरम्'(?) ख. पाठः.

---

* अत एव प्रयोगाद् भ्रन्शुधातोरात्मनेपदित्वमपि ।

**यौगन्धरायणः** — अथ दृष्टपूर्वस्त्वयैष पन्थाः ।

**सालकः**[1] — (क) णहि, सुदपुरुवो ।

**यौगन्धरायणः** — एतदपि मेधाविलक्षणम् । भोः! वनगजप्र[2]च्छादितशरीरं नीलहस्तिनमुपन्यस्य प्रद्योतः स्वामिनं छलयितुकाम इति प्रवृत्तिरुपगता नः । अपीदानीं स्वामिनो बुद्ध्यतिक्रमो न स्यात् । अहोतुखलु वत्सराजभीरुत्वं प्रद्योतस्य । व्यक्तीकृतमसामर्थ्यमक्षौहिण्याः । कुतः,

व्यक्तं बलं बहु च तस्य न चैककार्यं
सङ्ख्यातवीरपुरुषं च न चानुरक्तम् ।
व्याजं ततः समभिनन्दति युद्धकाले
सर्वं हि [3]सैन्यमनुरागमृते कलत्रम् ॥ ४ ॥

(प्रविश्य)

**विजया** — (ख) ळेहो खु अअं । पडिसरा सव्ववहूजणहत्था(दो) तुवारी[4]अदित्ति भट्टिमादा आह ।

**यौगन्धरायणः** — विजये! विज्ञाप्यतां[5] तत्रभवत्यै — सर्ववधूजन[6]हस्तप्रयुक्ता वा *एका वा प्रतिसरा दीयतामिति ।

---

(क) नहि, श्रुतपूर्वः ।

(ख) लेखः खल्वयम् । प्रतिसरा सर्ववधूजनहस्तात् त्वर्यत इति भर्तृमाताह ।

---

१. कः–'अय्य ! ण' ख. पाठः. २, 'दिश' ख. पाठः. ३. 'स' ख. पाठः. ४. 'दा' क. पाठः. ५. 'तामत्र' ख. पाठः. ६. 'सहस्रप्र' ख. पाठः.

---

* 'एका वा' इत्यस्य स्थाने 'या का वा' इति स्यात् ।

**विजया** —(क) अय्य! तह । (निष्क्रान्ता)

(प्रविश्य)

**निर्मुण्डकः** —(ख) सुहं अय्यस्स ।

**यौगन्धरायणः** —कथं निर्मुण्डकः ।.

**निर्मुण्डकः** —(ग) अय्य! एसो भट्टिपादमूळादो[1] ओवट्ठि- इओ हंसओ आअदो ।

**यौगन्धरायणः** —कथं हंसक एकः प्राप्त[2] इति । सालक! विश्रम्यतामिदानीं मुहूर्तम् । त्वरितं[3] वा यास्यसि[4] सविश्रमो वा ।

**सालकः** —(घ) अय्य! तह । (निष्क्रान्तः)

**यौगन्धरायणः** —निर्मुण्डक! प्रवेश्यतां हंसकः ।

**निर्मुण्डकः** —(ङ) अय्य! तह । (निष्क्रान्तः)

**यौगन्धरायणः** —स्वामिनाविरहितपूर्वो हंसक एकः प्राप्त इति $साविग्नमिव मे मनः । कुतः,

यथा नरस्याकुलबान्धवस्य गत्वान्यदेशं गृहमागतस्य ।
तथाहि मे सम्प्रति बुद्धिशङ्का श्रोष्यामि किन्नु प्रियमप्रियं वा ॥ ५ ॥

---

(क) आर्य! तथा ।

(ख) सुखमार्यस्य ।

(ग) आर्य! एष भर्तृपादमूलादौपस्थितिको हंसक आगतः ।

(घ) आर्य! तथा ।

(ङ) आर्य! तथा ।

---

१. 'ह्राइद हं' ख. पाठः. २. 'प्तः । सा' ख. पाठः. ३. 'ततरं वा' ख. पाठः. ४. 'ति' क. पाठः.

---

$ सावेगमिवेत्यर्थः.

(ततः प्रविशति हंसको निर्मुण्डकश्च)

**निर्मुण्डकः**— (क) एदु एदु अय्यो ।

**हंसकः**— (ख) कहिं कहिं अय्यो ।

**निर्मुण्डकः**— (ग) एसो अय्यो[1] चिट्ठइ, उवसप्पदु णं

**हंसकः**— (उपगम्य[2]) (घ) सुहं अय्यस्स ।

**यौगन्धरायणः**[3]— हंसक! न खलु गतः स्वामी नागवनम् ।

**हंसकः**— (ङ) अय्य! हिज्जो[4] एव्व गदो भट्टा ।

**यौगन्धरायणः**[5]— हन्त निष्फलमनुप्रेषणम् । छलिताः स्मः । अथास्ति प्रत्याशा, अद्यैव[6] प्राणा मोक्तव्याः ।

**हंसकः**— (च) धरदि खु दाँव[7] भट्टा ।

**यौगन्धरायणः**— धरते तावदि[8]त्यनू[9]र्जिता विपत्तिरभिहिता । गृहीतेन स्वामिना भवितव्यं ननु ।

---

(क) एत्वेत्वार्यः ।

(ख) कुत्र कुत्रार्यः ।

(ग) एष आर्यस्तिष्ठति, उपसर्पत्वेनम् ।

(घ) सुखमार्यस्य ।

(ङ) आर्य ! ह्य एव गतो भर्ता ।

(च) धरते खलु तावद् भर्ता ।

---

१. 'य्यो, उ' ख. पाठः. २. 'सृत्य)' ख. पाठः. ३. 'णः—न' क. पाठः. ४. 'ए' क. पाठः. ५. 'णः—नि' क. पाठः. ६. 'अथ प्रा' ख. पाठः. ७. 'भा' ख. पाठः. ८. 'दनू' क. पाठः. ९. 'त्य अञ्चिता' ख. पाठः.

**हंसकः**—(क) *सुट्ठु अय्येण विण्णादं[1], गहोदी भट्टा ।

**यौगन्धरायणः**—कथं गृहीतः स्वामी । हन्त भोः! महान् खलु भारः प्रद्योतस्य भाग्यैर्निस्तीर्णः । अद्यप्रभृति वत्सराजसचिवानां प्रतिष्ठितमसामर्थ्यमयशश्च । इदानीमनुत्पन्नकार्यपण्डितो रुमण्वान् क्व[2] गतः । इदानीमश्वारोहणीयं क्व गतम् । कुतः,

स्निग्धं च सौहृदहृतं च कुलोद्गतं च
व्यायामयोग्यपुरुषं च गुणार्जितं च ।
‡क्रीतं[3] परैर्गहनदुर्गतया प्रनष्टं
युद्धे समस्तमतिभारतया विपन्नम् ॥ ६ ॥

**हंसकः**—(ख) जइ समग्गजोहबळपरिवारो[4] भट्टा, ण एसो दोसो भवे ।

**यौगन्धरायणः**—कथमसमग्रयोधबलपरिवारो नाम स्वामी ।

**हंसकः**—(ग) सुणादु अय्यो ।

**यौगन्धरायणः**—अध्वश्रान्तो भवान् । आस्यताम् ।

---

(क) सुष्ठ्वार्येण विज्ञातं, गृहीतो भर्ता ।

(ख) यदि समग्रयोधबलपरिवारो भर्ता, नैष दोषो भवेत् ।

(ग) शृणोत्वार्यः ।

---

१. 'वर्णितो' ख. पाठः. २. 'कः' ख. पाठः ३. 'द' ख. पाठः. ४. 'रो णाम भ' ख. पाठः.

---

* 'सुष्ठु' इत्यादि 'स्वामी' इत्यन्तं न पठ्यते ख. पुस्तके । ‡ क्रीतं, प्रनष्टं, विपन्नम् इत्येतेषु प्रश्नकाकुर्बोध्या ।

**हंसकः**—(क) अय्य! तह्। (उपविश्य) सुणादु अय्यो। सावसेसपच्चूसाए रअणीए वाहणसुहाए वेळाए वाळुआतित्थेण[1] णइं णम्मदं तरिअ वेणुवणे कळत्तं आवासिअ छत्तमत्तपरिच्छ[2]देण गजजूहविमद्दजोग्गेण बळेण मग्गमदअ(णी?न्ती)ए* वीहीए णाअवणं पआदो भट्टा।

**यौगन्धरायणः**—ततस्ततः।

**हंसकः**—(ख) तदो इसुक्खेवमत्तोत्थिदे[3] सुय्ये एत्तिअमत्ताणि विअ जोअणाणि गच्छिअ कोसमत्तेण विअ मदअं(धीर?) पव्वदं अणासादिअ तडाअपङ्कुक्खित्तं अद्धणिम्मिदसिळाकम्मं विअ विसमदंसणं दिट्ठं णो णाअजूहं।

**यौगन्धरायणः**—ततस्ततः।

**हंसकः**—(ग) तदो णिज्झाअन्तीसु[4] सेणासु समुप्पण्णसङ्कापिण्डिदे[5] तस्सिं जूहे इमस्स अणत्थस्स[6] उप्पादओ कोच्चि पदादी भट्टारं एव्व उवट्ठिदो।

(क) आर्य! तथा। शृणोत्वार्यः। सावशेषप्रत्यूषायां रजन्यां वाहनसुखायां वेलायां वालुकातीर्थेन नदीं नर्मदां तीर्त्वा वेणुवने कलत्रमावास्य छत्रमात्रपरिच्छदेन गजयूथविमर्दयोग्येन बलेन मग्नमदयन्तिकया वीथ्या नागवनं प्रयातो भर्ता।

(ख) तत इषुक्षेपमात्रोत्थिते सूर्ये एतावन्मात्राणीव योजनानि गत्वा क्रोशमात्रेणेव मदय(न्धीर? न्ती)पर्वतम् अनासाद्य तटाकपङ्कोत्क्षिप्तम् अर्धनिर्मिताशिलाकर्मेव विषमदर्शनं दृष्टं नो नागयूथम्।

(ग) ततो निध्यायन्तीषु सेनासु समुत्पन्नशङ्कापिण्डिते तास्मिन् यूथेऽस्यानर्थस्योत्पादकः कश्चित् पदातिः भर्तारमेवोपस्थितः।

१. 'ण यण्णम्म' ख. पाठः. २. 'च्चच्छ' ख. पाठः. ३. 'सव्वेणाभाजहत्तदो' ख. पाठः. ४. 'सु स' ख. पाठः. ५. 'पीडिदे' ख. पाठः. ६. 'ट्ट' ख. पाठः.

* मदयन्ती मल्लिका।

**यौगन्धरायणः**—तिष्ठ । इतः क्रोशमात्रे मल्लिकासाल[1]-प्रच्छादितशरीरो नखदन्तवर्जमेकनीलो हस्ती[2] मया दृश्यते[3] इत्युक्तवान् ननु ।

**हंसकः**—(क) हं पडिण्णादं खु[4] अय्येण । जागत्ति[5] खु समुप्पण्णो अअं दोसो ।

**यौगन्धरायणः**—हंसक! जाग्रतोऽपि बलवत्तरः कृतान्तः। ततस्ततः ।

**हंसकः**—(ख) तदो सुवण्णसदप्पदाणेण तं णिसंसं पडिपूजिअ भट्टिणा उत्तं—अत्थि एसो चक्कवट्टी[6] हत्थी णीळ-कुवळअतणू णाम हत्थिसिक्खाएँ पठिदो । ता अप्पमत्ता होह तुह्मे इमस्सिं जूहे । गअं तं अहं वीणादुदीओ आणेमि त्ति ।

**यौगन्धरायणः**—अथ कथमुपेक्षितस्तदानीं स्वामी रुम-ण्वता ।

**हंसकः**—(ग) णहि णहि । पसादिअ भट्टा अमच्चेण विण्णाविदो—ण हु दे एळावणादीणं वि दिसागआणं गहणं ण

---

(क) हं परिज्ञातं खल्वार्येण । जाग्रति खलु समुत्पन्नोऽयं दोषः ।

(ख) ततः सुवर्णशतप्रदानेन तं नृशंसं परिपूज्य भर्त्रोक्तम्—अस्त्येष चक्रवर्ती हस्ती नीलकुवलयतनुर्नाम हास्तिशिक्षायां पठितः । तद् अप्रमत्ता भवत यूयमस्मिन् यूथे । गजं तमहं वीणाद्वितीय आनयामीति ।

(ग) नहि नहि । प्रसाद्य भर्तामात्येन विज्ञापितः—न खलु ते ऐरावणादीनामपि दिशागजानां ग्रहणं न सम्भावनीयम् । अपितु दुरारक्षतयासन्नदोषाणि विषयान्त-

---

१. ‘लताप्र’ ख. पाठः. २. ‘महन्ति म’ ख. पाठः. ३. ‘तवा’ ख. पाठः. ४. ‘खु एदं अ’ ख. पाठः. ५. ‘न्ति स’ ख. पाठः. ६. ‘त्ती’ ख. पाठः. ७. ‘एमएप’ ख. पाठः. ८. ‘णं दि’ क. पाठः.

सम्भावणीअं। अविदु दुरारक्खदाए आसण्णदोसाणि विसअन्तराणि। तहिं [1]णिळज्जो णिरभिजणो पच्चन्त[2]वासी जणो। ता पदादि[3]मेत्ताहिट्ठिदं इमं जूहं करिअ सव्व एव्व गच्छामो, ण एकाइणा सामिणा गन्तव्वं त्ति।

**यौगन्धरायणः**—अपि महाजन[4]समक्षमेवमुक्तः स्वामी रुमण्वता। एवमप्यवक्तव्यां स्वामिभक्तिमिच्छामि। ततस्ततः।

**हंसकः**—(क) तदो अत्तजीविदणिद्दिट्ठेण सवहेण णिवारि[5]अं अमच्चं णीळवळाहआदो हत्थिणो ओदरिअ [6]सुन्दरपाडळं णाम अस्सं आळुहिअ अणद्धा[7]गए सुय्ये विंसदिमत्ते[8]हिं पदादिहिं सह पआदो भट्टा।

**यौगन्धरायणः**—विजयाय। हा धिक्, [9]स्नेहात् पूर्ववृत्तान्तो नावेक्षितः। ततस्ततः।

**हंसकः**—(ख) तदो दिउणं विअ अद्धाणं गच्छिअ साळुक्खच्छाआए सवण्णणट्ठणीळदाए परुब्भासिदेहिं असरीर-

---

राणि। तत्र निर्लज्जो निरभिजनः प्रत्यन्तवासी जनः। तत् पदातिमात्राधिष्ठितमिदं यूथं कृत्वा सर्व एव गच्छामः, नैकाकिना स्वामिना गन्तव्यमिति।

(क) तत आत्मजीवितनिर्दिष्टेन शपथेन निवार्यामात्यं नीलवलाहकाद् हस्तिनोऽवतीर्य सुन्दरपाटलं नामाश्वमारुह्यानर्धागते सूर्ये विंशतिमात्रैः पदातिभिः सह प्रयातो भर्ता।

(ख) ततो द्विगुणमिवाध्वानं गत्वा सालवृक्षच्छायायां सावर्ण्यनष्टनीलतया प्रोद्भा-

---

१. 'णिरभिजणो णिर्लज्जो प' ख. पाठः. २. 'सी जवासी ज' ख. पाठः. ३. हिमन्तहिविदं ख. पाठः. ४. 'नमहास' ख. पाठः. ५. 'अच्चं' ख. पाठः. ६. 'स' क, 'सुन्नन्द' ख. पाठः. ७. 'वा' ख. पाठः. ८. 'दिव प' ख. पाठः. ९. 'सेहान् पू' क. पाठः.

[1]विणिक्खित्तेहि [2]विअ दन्तजुअळेहि* [3]सूइदो धणुसदमत्तेण विअ दिट्ठो सो दिव्ववारणपडिच्छन्दो ।

**यौगन्धरायणः**—हंसक! अस्मत्परिताप इत्युच्यताम्[4] । ततस्ततः ।

**हंसकः**—(क) तदो भट्टिणा ओदरिअ अस्सादो आअमिअ देवदाणं पणामं करिअ गहीदा वीणा । तदो [5]एक्ककिदणिच्चओ विअ महन्तो कण्ठीरवो समुप्पण्णो ।

**यौगन्धरायणः**—कण्ठीरव इति । ततस्ततः ।

**हंसकः**—(ख) तदो कण्ठीरवपरिण्णाणणिमित्तं परिवुत्ता अ वअं । महामत्तोत्तराउहीआ[6]हिट्ठिदो[7] पच्चुग्गदो सो किदअ-हत्थी ।

**यौगन्धरायणः**—ततस्ततः ।

**हंसकः**—(ग) तदो णामगोत्तग्गहणेण समस्सा[8]सिअ

---

सिताभ्यामशरीरविनिक्षिप्ताभ्यामिव दन्तयुगलाभ्यां सूचितो धनुःशतमात्रेणेव दृष्टः स दिव्यवारणप्रतिच्छन्दः ।

(क) ततो भर्त्रावतीर्याश्वादागम्य देवतानां प्रणामं कृत्वा गृहीता वीणा । तत एककृतनिश्चय इव महान् कण्ठीरवः समुत्पन्नः ।

(ख) ततः कण्ठीरवपरिज्ञाननिमित्तं परिवृत्ताश्च वयम् । महामात्रोत्तरायुधीयाधिष्ठितः प्रत्युद्गतः स कृतकहस्ती ।

(ग) ततो नामगोत्रग्रहणेन समाश्वास्य कुलपुत्रजनं सर्वथा प्रद्योतप्रयोग एषः,

---

१. 'सिणिक्खित्तेहि असरीरविणि' ख. पाठः. २. 'हि अ' ख. पाठः. ३. 'आळिदो' ख. पाठः ४. 'म् । हं' ख. पाठः. ५. 'चक्कदो एक्काणि' ख. पाठः. ६. 'भा' ख. पाठः. ७. 'ओ' ख. पाठः. ८. 'स्स' ख. पाठः.

---

* दन्तचतुष्टयाभिप्राय स्यात्.

कुळवुत्तजणं सव्वहा पज्जोदप्पओओ एसो, अणुगच्छह मं, अहं दाणिं परस्स उवण्णासं विसमारम्भं पैरक्कमेण[2] समीकरोमि त्ति भणिअ भट्टा पविट्ठो एव्व तं परबळं ।

**यौगन्धरायणः**—प्रविष्ट इति । अथवा ननु स्थाने,

व्रीलितो वञ्चनां प्राप्य मानी सत्त्वमुपाश्रितः ।
शूरश्चैकायनस्थश्च किमन्यत् प्रतिपद्यते ॥ ७ ॥

ततस्ततः ।

**हंसकः**—(क) तदो कीळाअमाणो विअ अत्तच्छन्दाणुवत्तिणा सुन्दरपाडळेण अस्सेण अत्ताभिप्पाआदो[3] अहिअं पहरन्तो अदिबहुकदाए परबळस्स अदिप्पउज्जमाणवाआमो विसण्णणट्ठ[4]सव्वपरिजणो मए एक्काइणा, णहि णहि भट्टिणा एव्व रक्खिअमाणो अणुबद्धादिवसजुद्ध[5]परिस्सन्तो बहुप्पहाराणिपडिअतुरओ तम्माअमाणसुय्यदारुणाए वेळाए मोहं गदो भट्टा ।

**यौगन्धरायणः**—कथं मोहमुपगतः स्वामी । ततस्ततः ।

---

अनुगच्छत माम्, अहमिदानीं परस्योपन्यासं विषमारम्भं पराक्रमेण समीकरोमीति भणित्वा भर्ता प्रविष्ट एव तत् परबलम् ।

(क) ततः क्रीडन्निवात्मच्छन्दानुवर्तिना सुन्दरपाटलेनाश्वेनात्माभिप्रायादधिकं प्रहरन् अतिबहुकतया परबलस्यातिप्रयुज्यमानव्यायामो विषण्णनष्टसर्वपरिजनो मयैकाकिना, नहि नहि भर्त्रैव रक्ष्यमाणोऽनुबद्धदिवसयुद्धपरिश्रान्तो बहुप्रहारानिपतिततुरगस्ताम्यत्सूर्यदारुणायां वेलायां मोहं गतो भर्ता ।

---

१. 'अ' ख. पाठः. २. 'पक्क' क. पाठः. ३. 'दो वि अ' ख पाठः. ४. 'ठ्ठप' ख पाठः. ५. 'द्धस्स' ख. पाठः.

**हंसकः**—(क) तदो जहासत्ति सण्णिहिदगहणुप्पाडिदाहि अविण्णाअमाणजादीहि कक्कसाहि[1] ळदाहि पाकिदो विअ सरीरअन्तणादो पहरिसिदो[2] भट्टा ।

**यौगन्धरायणः**—कथं प्रधर्षितः स्वामी ।

[3]पीनांसस्य विकृष्टपर्वमहतो नागेन्द्रहस्ताकृते-
श्चापास्फालिकरस्य दूरहरणाद् बाणाधिकारोपिणः ।
विप्राभ्यर्चयितुः श्रमेषु सुहृदां सत्कर्तुरालिङ्गनै-
र्न्यस्तं तस्य भुजद्वयस्य वलयस्थानान्तरे बन्धनम् ॥ ८ ॥

अथ कस्यां वेलायां प्रत्यागतप्राणः स्वामी ।

**हंसकः**[4]—(ख) अवसिदावळेवेसु पावेसु ।

**यौगन्धरायणः**—दिष्ट्या शरीरं धर्षितं, न तेजः। ततस्ततः ।

**हंसकः**—(ग) तदो पच्चाअदप्पाणं[5] दाणि भट्टारं पेक्खिअ *अणेण मम भादा हदो[6], अणेण मम पिदा, अणेण मम सुदो, मम वअस्स[7] त्ति अण्णहा भट्टिणो परक्कमं वण्णअन्ता[8] अभिद्दुदा दे पावा ।

---

(क) ततो यथाशक्ति सन्निहितगहनोत्पाटिताभिरविज्ञायमानजातिभिः कर्कशाभिर्लताभिः प्राकृत इव शरीरयन्त्रणात् प्रधर्षितो भर्ता ।

(ख) अवसितावलेपेषु पापेषु ।

(ग) ततः प्रत्यागतप्राणमिदानीं भर्तारं प्रेक्ष्यानेन मम भ्राता हतोऽनेन मम पितानेन मम सुतो मम वयस्य इति अन्यथा भर्तुः पराक्रमं वर्णयन्तोऽभिद्रुतास्ते पापाः ।

---

१. 'कसोहि' क. पाठः. २. 'द्ध' ख. पाठः. ३. वीणां न्यस्य (?) ख. पाठः. ४. 'कः—अय्य! अ' ख. पाठः. ५. 'ग' ख. पाठः. ६. 'दो मम सु' ख. पाठः. ७. 'स्सो' ख. पाठः. ८. 'न्ता सव्वदो अ' ख. पाठः.

---

* एतत्प्रकरणेतिवृत्तौचित्यविचारप्रसङ्गे भामहेन ग्रन्थनामानिर्दिशतापि वाक्यमिदमनूदितं शब्दतोऽर्थतश्च । यथा—'हतोऽनेन मम भ्राता मम पुत्रः पिता मम । मातुलो भागिनेयश्च रुषा संरब्धचेतसा' इति ।

**यौगन्धरायणः**—ततस्ततः ।

**हंसकः**[1]—(क) अण्णं च दाणि अ[2]च्छरिअं । एक्को ववसिदो अक[3]य्यं कत्तुं । सो दक्खिणाहिमुहं परिवत्तिअ भट्टारं समरवाआमसङ्खोहिदाणि णिरुवआरं[4] सङ्खिविअ केसाणि पीडिअ करेण करवाळं पहारवेगं उप्पादइदुकामो आ[5]धावन्तो ।

**यौगन्धरायणः**—हंसक ! वृत्तान्तं तावदा[6]धारय । याव[7]दहमुच्छ्वसामि† ।

**हंसकः**—(ख) तदो ळुहिळपडळपिच्छिळाए भूमीए सो णिसंसओ सएण वेएण ओघट्टिदचळणो पडिहदारम्भो हदो पडिदो ।

**यौगन्धरायणः**—पतितः पाप एषः । भोः !

परचक्रैरनाक्रान्ता धर्मसङ्करवर्जिता ।
भूमिर्भर्तारमापन्नं रक्षिता परिरक्षति ॥ ९ ॥

---

(क) अन्यच्चेदानीमाश्चर्यम् । एको व्यवसितोऽकार्यं कर्तुम् । स दक्षिणाभिमुखं परिवर्त्य भर्तारं समरव्यायामसंक्षोभितान् निरुपचारं संक्षिप्य केशान् पीडयित्वा करेण करवालं प्रहारवेगमुत्पादयितुकाम आधावन् ।

(ख) ततो रुधिरपटलपिच्छिलायां भूमौ स नृशंसकः स्वेन वेगेनावघट्टितचरणः प्रतिहतारम्भो हतः पतितः ।

---

१. 'कः — तदो अ' क. पाठः. २. 'अच्चाहिदं तहिं तहिं अण्णोण्णाणुणएण ए' ख. पाठः. ३. 'कत्तुं' ख. पाठः. ४. 'रस्सङ्खि' ख. पाठः. ५. 'हा' ख. पाठः. ६. 'द्धार' ख. पाठः. ७. 'दुच्छ्व' ख. पाठः.

---

† उच्छ्वसामीति 'न विश्वसेदविश्वस्तमि'तिवत् 'आश्वसेयुर्निशाचरा' इतिवच्च प्रयोगः । 'उच्छ्वसिमि'इति वा पाठ्यम् ।

**हंसकः**—(क) तदो भट्टिणा पुढमं कुन्तप्पहारजणिदमोहो साळङ्काअणो णाम पज्जोदस्स अमच्चो[1] 'माखु माखु साहसं' त्ति भणिअ तं देसं[2] उवट्ठिदो ।

**यौगन्धरायणः**—ततस्ततः ।

**हंसकः**—(ख) तदो तक्काळदुळ्ळहं पणामं[3] करिअ सरीर-अन्तणादो तेण मोइदो भट्टा ।

**यौगन्धरायणः**—विमुक्तः स्वामी । साधु भोः शालङ्कायन ! साधु । अवस्था खलु नाम शत्रुमपि सुहृत्त्वे कल्पयति । हंसक! व्यसनात् किञ्चिदुच्छ्वसितमिव मे मनः । अथ किं प्रतिपन्नं तेन साधुना ।

**हंसकः**—(ग) तदो तेण अय्येण अणेअं[4] सोवआरं सन्तिवअणं भणिअ गाढ[5]बहुप्पहारदाए असमत्थो वाहणासणत्ति बन्ध[6]सअणं आरोविअ उज्जइणिं एव्व णीदो भट्टा ।

**यौगन्धरायणः**—नीतः स्वामी । एष सोऽनर्थः ।

एतत् तन्न्यङ्ग[7]मस्माकमेष सोऽतिमनोरथः ।
प्रद्योतस्य मनस्वित्वात्[8] स्वामी दुःखेषु वर्तते ॥ १० ॥

---

(क) ततो भर्त्रा प्रथमं कुन्तप्रहारजनितमोहः शालङ्कायनो नाम प्रद्योतस्यामात्यो 'माखलु माखलु साहसमि'ति भणित्वा तं देशमुपस्थितः ।

(ख) ततस्तत्कालदुर्लभं प्रणामं कृत्वा शरीरयन्त्रणात् तेन मोचितो भर्ता ।

(ग) ततस्तेनार्येणानेकं सोपचारं शान्तिवचनं भणित्वा गाढबहुप्रहारतयासमर्थो वाहनासन इति बन्धशयनमारोप्योज्जयिनीमेव नीतो भर्ता ।

---

१. 'र्चो (ळ?उ)ठ्ठिदो मा' ख. पाठः. २. 'सं आअदो' ख. पाठः. ३. 'प्रमाणं करिअ ते' ख. पाठः. ४. 'अस्सोवआरस्स' ख. पाठः. ५. 'ढं' ख. पाठः. ६. 'न्धणसस' ख. पाठः. ७. 'स्यङ्कम' क. पाठः, 'न्न्यङ्कमन्माक' ख. पाठः. ८. 'हस्थित्वा' क. पाठः.

अथ,

कथमगणितपूर्वं द्रक्ष्यते‡ तं नरेन्द्रः
कथमपुरुषवाक्यं श्रोष्यते सिद्धवाक्यः ।
कथमविषयवैन्ध्यं[१] धारयिष्यत्यमर्षं
प्रणिपतति निरुद्धः सत्कृतो धर्षितो वा ॥ ११ ॥

(प्रविश्य)

**प्रतीहारी[२] —** (क) अय्य! ऍसा[३] पडिसरा ।

**यौगन्धरायणः —**

एतानि तान्यापतितानि काले§
भाग्यक्षयान्निष्फलमुद्यतानि ।
तुरङ्गमस्येव रणे निवृत्ते
नीराजनाकौतुकमङ्गलानि ॥ १२ ॥

**प्रतीहारी —** (ख) अय्य! इमा पडिसरा ।

**यौगन्धरायणः —** विजये! स्थाप्यताम् ।

**प्रतीहारी —** (ग) किं त्ति भट्टिमादरं णिवेदेमि ।

---

(क) आर्य! एषा प्रतिसरा ।
(ख) आर्य! इयं प्रतिसरा ।
(ग) किमिति भर्तृमातरं निवेदयामि ।

---

१. 'बन्धं धा' ख. पाठः. २. 'ति' क. पाठः. ३. 'इमा प' ख. पाठः.

---

‡ 'ततः स ददृशे च तौ', 'तच्छृणुष्व मयाख्यातम्', 'नन्दते च कुलं पुंसाम्' इति प्रयोगेष्वात्मनेपदानुपपत्तिमाशङ्क्य 'कर्मकर्तरि वा रूपाणि' इति समाधानमुक्तं दुर्घटवृत्तौ । सैव गतिरिहापि द्रष्टव्या 'द्रक्ष्यते' 'श्रोष्यते' इति । § 'गते' इति शेषः । 'अकाले' इति वा पाठः स्यात् ।

**यौगन्धरायणः** — विजये! एवमेतत् ।

**प्रतीहारी** — (क) किं एदं ।

**यौगन्धरायणः** — इदम् ।

**प्रतीहारी** — (ख) भणादु भणादु अय्यो भणादु ।

**यौगन्धरायणः** — अथवा नैतच्छक्यं परिहर्तुम् । निवेदयिष्याम्यत्रभवत्यै[1] । विजये! स्थिरीक्रियतामात्मा । (कर्णे) एवमिव ।

**प्रतीहारी** — हं[2] ।

**यौगन्धरायणः** — विजया खल्वासि ।

**प्रतीहारी** — (ग) एसा गच्छामि मन्दभाआ ।

**यौगन्धरायणः** — विजये! न खलु त्वयात्रभवत्यै गृहीतः स्वामीति सहसा निवेदयितव्यम्[3] । स्नेहदुर्बलं[4] मातृहृदयं रक्ष्यम् ।

**प्रतीहारी** — (घ) कहं[5] दाणि णिवेदेमि ।

**यौगन्धरायणः** — शृणु ।

पूर्वं तावद् युद्धसम्बद्धदोषाः
प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे
रूढे[6] शोके कार्यतत्त्वं निवेद्यम् ॥ १३ ॥

---

(क) किमेतत् ।

(ख) भणतु भणत्वार्यो भणतु ।

(ग) एषा गच्छामि मन्दभागा ।

(घ) कथमिदानीं निवेदयामि ।

---

१. 'मस्तत्र' ख. पाठः. २. 'हा' ख. पाठः. ३. 'दित' ख. पाठः. ४. 'लह' ख. पाठः. ५. 'अ' ख. पाठः. ६. 'रुद्धे शो' ख. पाठः.

**प्रतीहारी** — (क) घत्तिस्सं। (निष्क्रान्ता)

**यौगन्धरायणः** — हंसक! त्वमिदानीं स्वामिनो[1] किं न गतः।

**हंसकः** — (ख) अय्य! ववसिदो खु अहं अत्ताणं अणुग्गहिदुं[2] साळङ्काअणेण णिउत्तो — गच्छ, इमं उत्तन्तं कोसम्बीए णिवेदेहि त्ति।

**यौगन्धरायणः** — किन्नुखल्विदानीं निराशमनुसारं कर्तुकामः, उताहो स्निग्धपुरुषसन्निकर्षं परिहरति।

**हंसकः** — (ग) अहइं।

**यौगन्धरायणः** — स स्वकं विस्मयादात्मानमाविष्करोति,[3] उत सर्वारम्भसिद्धौ[4] रमणीयं भवति। अथ मामन्तरेण स्वामी न किञ्चिदाह।

**हंसकः**[5] — (घ) अय्य! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तज्जळावगाढाए[6] दिट्ठीए बहुकं सन्दट्ठुकामेण विअँ[7] ह्मि भट्टिणा उत्तो[8] — गच्छ जोअन्ध।

---

(क) ग्रहीष्यामि।

(ख) आर्य! व्यवसितः खल्वहमात्मानमनुग्रहीतुं सालङ्कायनेन नियुक्तः—गच्छेमं वृत्तान्तं कौशाम्ब्यां निवेदयेति।

(ग) अथकिम्।

(घ) आर्य! अस्ति, प्रदक्षिणीकुर्वन् भर्तारमन्तर्जलावगाढया दृष्ट्या बहुकं सन्द्रेष्टुकामेनेवास्मि भर्त्रोक्तः — गच्छ यौगन्ध।

---

१. 'ना सह किं' ख. पाठः. २. 'दुमय्येण सा' ख. पाठः. ३. 'ल' ख. पाठः. ४. 'सन्निग्धो र' ख. पाठः. ५. 'कः—अत्थि' ख. पाठः. ६. 'ए ब' क. पाठः. ७. 'अ भ' ख. पाठः. ८. 'त्तो—जो' ख. पाठः.

**यौगन्धरायणः** — स्वैरमभिधीयतां, स्वामिवाक्यमेतत् ।

**हंसकः** — (क) जोअन्धराअणं पेक्खेहि त्ति ।

**यौगन्धरायणः** — मा तावत् । सर्वसचिवमण्डलमतिक्रम्यैको यौगन्धरायणो द्रष्टव्य इत्याह ।

**हंसकः** — (ख) अहइं ।

**यौगन्धरायणः** — तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी ।

**हंसकः** — (ग) बाहं ।

**यौगन्धरायणः** — पुरुषान्तरितं मां द्रक्ष्यति स्वामी,

रिपुनृपनगरे वा बन्धने वा वने वा
समुपगतविनाशः प्रेत्य वा तुल्यनि[1]ष्ठम् ।
जित[2]मिति कृतबुद्धिं[3] वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम् ॥ १४ ॥

(नेपथ्ये)

(घ) हा हा भट्टा !

---

(क) यौगन्धरायणं प्रेक्षस्वेति ।

(ख) अथकिम् ।

(ग) बाढम् ।

(घ) हा हा भर्तः !

---

१. 'ष्ठः' ख. पाठः. २. 'इ' ख. पाठः. ३. 'द्धिर्वे' ख. पाठः.

**यौगन्धरायणः —**

एष शोकप्रतीकारो यथाशक्ति निवेद्यते[1] ।
एतत् स्त्रीभिरसामर्थ्यं मन्त्रिणामनुवर्ण्यते ॥ १५ ॥

(प्रविश्य)

**प्रतीहारी —** (क) अय्य! भट्टिमादा[2] ।

**यौगन्धरायणः —** किं किम् ।

**प्रतीहारी —** आह ।

**यौगन्धरायणः —** किमिति ।

**प्रतीहारी —** (ख) एवंविहस्स सुहिज्जणेण परिगिहीदस्स वच्छराअस्स अअं वुत्तन्तो । किं सक्कं[3] कत्तुं अन्तरेण विहाणं[4] । ता सम्माणिअ सुहिज्जणं समत्थिअदु । जो खु दाणि सङ्कटेसु[5] वा ण विसीदिदि, विसमगदो वा ण पय्यवचिट्ठदि, वञ्चिदो वा ण णिव्वेदं गच्छदि[6], पडिघादेसु वा पाणा ण समुज्झदि, सो खु बुद्धिमन्तो पुच्छिज्जइ पढमं एव्व मे वच्छस्स वअस्सो पच्चा अमच्चो आणेदु मे पुत्तअं पुत्तओ त्ति ।

---

(क) आर्य! भर्तृमाता ।

(ख) एवंविधस्य सुहृज्जनेन परिगृहीतस्य वत्सराजस्यायं वृत्तान्तः । किं शक्यं कर्तुमन्तरेण विधानम् । तत् सम्मान्य सुहृज्जनं समर्थ्यताम् । यः खल्विदानीं सङ्कटेषु वा न विषीदति, विषमगतो वा न पर्यवतिष्ठते, वञ्चितो वा न निर्वेदं गच्छति, प्रतिघातेषु वा प्राणान् न समुज्झति, स खलु बुद्धिमान् पृच्छ्यते प्रथममेव मे वत्सस्य वयस्यः पश्चादमात्य आनयतु मे पुत्रकं पुत्रक इति ।

---

१. 'तं' ख. पाठः. २. 'दा–आह । यौगन्धरायणः–किमिति' ख. पाठः. ३. 'किं' क. पाठः. ४. 'णं । स' क. पाठः. ५. 'डे वा णावसीददि' ख. पाठः. ६. 'इ' ख. पाठः. ७. 'सु पा' क. पाठः. ८. 'दि' क. पाठः. ९. 'ज्ञ' क. पाठः.

**यौगन्धरायणः**—अहो तु खल्वत्रभवत्या राजवंशाश्रितं धीरवाक्यमभिहितम् । अत्रभवत्याः सम्भावनां[1] पूजयामि । विजये! आपस्तावत् ।

**प्रतीहारी**[2]—(क) अय्य! तह । (निष्क्रम्य प्रविश्य) इमा आवो ।

**यौगन्धरायणः**—आनय[3] । (आचम्य) विजये! किमाह तत्रभवती ।

**प्रतीहारी**—(ख) आणेदु[4] मे पुत्तअं पुत्तओ त्ति ।

**यौगन्धरायणः**—हंसक! किमाह स्वामी ।

**हंसकः**—(ग) जोअन्धराअणं पेक्खेहि त्ति ।

**यौगन्धरायणः**—विजये!

यदि शत्रुबल[5]ग्रस्तो राहुणा चन्द्रमा इव ।(?)
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १६ ॥

**प्रतीहारी**—(घ) अय्य! तह । (निष्क्रान्ता)

(प्रविश्य)

**निर्मुण्डकः**—(ङ) अय्य! अच्छरिअं[6] णिव्वुत्तं । भट्टिणो सन्तिणिमित्तं उवट्ठिअ[7]भोअणं बह्मणजणं पेक्खिअ केण वि

---

(क) आर्य! तथा । इमा आपः ।

(ख) आनयतु मे पुत्रकं पुत्रक इति ।

(ग) यौगन्धरायणं प्रेक्षस्वेति ।

(घ) आर्य! तथा ।

(ङ) आर्य! आश्चर्यं निर्वृत्तम् । भर्तुः शान्तिनिमित्तमुपस्थितभोजनं ब्राह्मण-

---

१. 'नं' ख. पाठः. २. 'री—त्त' ख. पाठः. ३. '(आच' ख. पाठः. ४. 'णुवेदु' ख. पाठः. ५. 'बग्र' क. पाठः. ६. 'अं अच्छरिअं । एदं खु भ' ख. पाठः. ७. 'अं णं बह्मणं पे' ख. पाठः.

किळ उम्मत्तवेसधारिणा बह्मणेण उच्चं हसिअ उत्तं— सेरं सेरं अह्णन्तु भवन्तो, अब्भुदअं खु इमस्स राअउळस्स भविस्सदि त्ति । तदो वअणसमआळं एव्व अदंसणं गदो ।

**यौगन्धरायणः**— अपि सत्यम् ।

(ततः प्रविशति ब्राह्मणः)

**ब्राह्मणः**— इमेऽत्रभवता परिगृहीता आत्मप्रयोजनोत्सृष्टाः परिच्छदविशेषाः । एभिः प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः ।

**यौगन्धरायणः**— एवं द्वैपायनः प्राप्तः ।

**ब्राह्मणः**— बाढम् ।

**यौगन्धरायणः**— तेन हि पश्यामस्तावत् ।

**ब्राह्मणः**— पश्यतु भवान् ।

**यौगन्धरायणः**— कथमन्यद् रूपमिव मे संवृत्तम् । हन्त भोः! गतोऽस्मि स्वामिसन्निकर्षमेव । इदानीं ममोपदेशार्थमिवोत्सृष्टाः ।

उन्मत्तसदृशो वेषो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

---

जनं प्रेक्ष्य केनापि किलोन्मत्तवेषधारिणा ब्राह्मणेनोच्चं हसित्वोक्तं— स्वैरं स्वैरमश्नन्तु भवन्तः । अभ्युदयः खल्वस्य राजकुलस्य भविष्यतीति । ततो वचनसमकालमेवादर्शनं गतः ।

---

१. 'व' ख. पाठः. २. 'मं सेमं अह्णन्त भ' ख. पाठः. ३. 'दस्सण' ख. पाठः. ४. 'द्द' ख. पाठः. ५. 'न्यरूपमिदमेव सं' ख. पाठः.

(प्रविश्य)

**प्रतीहारी** — (क) अय्य ! भट्टिमादा आह — इच्छामि मे पुत्तअं पेक्खिदुं त्ति ।

**यौगन्धरायणः** — अयमयमागच्छामि । आर्य ! शान्तिगृहे मां प्रतीक्षस्व ।

**ब्राह्मणः** — बाढम्[1] । (निष्क्रान्तः)

**यौगन्धरायणः** — हंसक ! विश्रम्यतामिदानीम् ।

**हंसकः** — (ख) अय्य ! तह । (निष्क्रान्तः)

**यौगन्धरायणः** — विजये ! गच्छाग्रतः ।

**प्रतीहारी** — (ग) अय्य ! तह ।

**यौगन्धरायणः** — भोः !

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना[2] ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १८ ॥

(निष्क्रान्तौ)

**प्रथमोऽङ्कः ।**

---

(क) आर्य ! भर्तृमाताह — इच्छामि मे पुत्रकं प्रेक्षितुमिति ।

(ख) आर्य! तथा ।

(ग) आर्य! तथा ।

---

१. 'तथास्तु ।' ख. पाठः. २. 'मथ्यमा' क. पाठः.

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः** — आभीर[1]क! आभीर[2]क! गच्छ महासेनवचनात् प्र[3]तीहाररक्षकं ब्रूहि — एष काशिराजोपाध्याय आर्यजैवन्तिर[4]द्य दौ[5]त्येन प्राप्तः । सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव निवेश्यताम्। यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति । भोः! एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न खलु महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्नुखल्विदम् । अथवा दैवमत्र कन्याप्रदानेऽधिकृत[6]म् । कुतः,

व्यक्तं न तावत् समुपैति तस्य
दूतो वधूत्वेऽवहितोऽपि तस्य ।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो
न वेत्ति जानन्नपि तत्प्रतीक्षः ॥ १ ॥

अये *सतीयमानान्तःपुरचरः सनाथीभवत्ययं देशः । अये अयं महासेनः । य एषः,

दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
‡पीताङ्गदैः परिगतैः †परिणीहितांसः ।

---

१. २. 'रु' ख. पाठः. ३. 'तिगार' क. पाठः. ४. 'रभ्यागतः । सा' ख. पाठः. ५. 'प्तः । अस्य सा' क. पाठः. ६. 'तम् । अयं म' क. पाठः.

---

* सतीङ्शब्दः कण्ड्वादिषु द्रष्टव्यः। ‡ स्वर्णाङ्गदैरित्यर्थः । † परिनिपूर्व ईहतिर्बोध्यः । 'परिणाहिते' ति वा पाठः ।

अस्माद् घनात् कनकतालवनैकदेशा-
न्निर्धावितः शरवणादिव कार्तिकेयः ॥ २ ॥

(निष्क्रान्तः)

विष्कम्भकः ।

---

(ततः प्रविशति राजा सपरिवारः)

**राजा** —

मम हयखुरभिन्नं मार्गरेणुं नरेन्द्रा
मुकुटतटविलग्नं भृत्यभूता वहन्ति ।
न च मम परितोषो यन्न मां वत्सराजः
प्रणमति गुणषाली कुञ्जरज्ञानद[1]प्तः ॥ ३ ॥

बादरायण !

(प्रविश्य)

**काञ्चुकीयः** — जयतु महासेनः ।

**राजा** — निवेशि[2]तो जैवन्तिः ।

**काञ्चुकीयः** — निवेशितोऽनुरूप[3]तश्च सत्कृतः ।

**राजा** — न्याय्यं कृतं राज[4]वंश्यगुणाभिलाषिणा । समा[5]गतानां युक्तः पूजा[6]परिग्रहः । अथ सर्वोऽपि कन्याप्रदानं [7]प्रति पृष्टश्चेत् परच्छन्देन तिष्ठ[8]ति । (काञ्चुकीयमवलोक्य) बादरायण ! वक्तुका(म?मम्) इव त्वां लक्षये ।

---

१. 'तृ' ख. पाठः. २. 'दि' ख. पाठः. ३. 'पश्च' क. पाठः. ४. 'वै' क. पाठः. ५. 'मासन्नप्रतीकारेणाग' क. पाठः. ६. 'प्रतिग्रहः । स' ख. पाठः. ७. 'पृष्ट' ख. पाठः. ८. 'ति । बा' ख. पाठः.

**काञ्चुकीयः**—न खलु[1] किञ्चित्। कन्याप्रदानं प्रति[2] समुत्पन्नोऽभिमर्शः।

**राजा**—अलं परिहृत्य। सर्वसाधारणो ह्येष विधिः। आभिधीयताम्।

**काञ्चुकीयः**—महासेन! एषा मे विवक्षा—एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते। न च महासेनः कश्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते। किन्नुखल्विदमिति।

**राजा**[3]—बादरायण! एवमेतत्। अतिलोभाद् वरगुणानामतिस्नेहाच्च वासवदत्तायां न शक्नोमि[4] निश्चयं गन्तुम्।

कुलं तावच्छ्लाघ्यं[5] प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान्।
ततो रूपे[6] कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः॥ ४॥

**काञ्चुकीयः**—महासेनं वर्जयित्वा नहीदानीं[7]मेते गुणाः क्वचिदेकस्था दृश्यन्ते।

**राजा**—अतः खलु[8] चिन्त्यते।

कन्याया वरसम्पत्तिः पितुः प्रयत्नः (?)*।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा॥ ५॥

---

१. 'लु। क' ख. पाठः. २. 'ति दू' ख. पाठः. ३. 'जा—ए' ख. पाठः. ४. 'निश्चयार्थं गन्तुं शक्नोमि।' ख. पाठः. ५. 'ताच्चार्घ्यं' क. पाठः. ६. 'पं कान्तिर्न' ख. पाठः. ७. 'नीं क्वचिदेते गुणा एक' ख. पाठः. ८. 'लु, क' क. पाठः.

---

* 'पितुः प्रायः प्रयत्नतः' इति द्वितीयः पादः पाठ्यो भाति।

दुहितुः प्रदानकाले दुःखशीला हि मातरः । तस्माद् देवी तावदाहूयताम् ।

**काञ्चुकीयः**[1] — यदाज्ञापयति महासेनः । (निष्क्रान्तः)

**राजा** — भोः! काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं[2] गतं शालङ्कायनं[3] प्रति गता मे बुद्धिः[4] । किन्नुखल्वद्यापि वृत्तान्तं न प्रेषयति स ब्राह्मणः ।

कामं या तस्य सा लीला तत्रैवानुगतं मनः ।
ये त्वस्य सचिवाः सर्वे यत्नमास्थाय[5] ते स्थिताः ॥ ६ ॥

(ततः प्रविशति देवी[6] सपरिवारा)

**देवी** — (क) जेदु महासेणो[7] ।

**राजा**[8] — आस्यताम् ।

**देवी** — (ख) जं महासेणो आणवेदि । (उपविशति)

**राजा**[9] — वासवदत्ता क्व ।

**देवी** — (ग) उत्तराए वेदाळीए[10] सआसे वीणं सिक्खिदुं णारदीअं गओ[11] आसी ।

---

(क) जयतु महासेनः ।

(ख) यन्महासेन आज्ञापयति ।

(ग) उत्तराया वैताल्याः सकाशे वीणां शिक्षितुं नारदीयां गतासीत् ।

---

१. 'यः—भोः' ख.पाठः. २. 'र्थं शा' क. पाठः. ३. 'नं ग' ख. पाठः. ४. 'द्धिरिति । कि' ख. पाठः. ५. 'स्त्या' ख. पाठः. ६. 'वी) दे' ख. पाठः. ७. 'राओ। ' ख. पाठः. ८. 'जा—देवि! आ' ख. पाठः. ९. 'जा—देवि! क्व वासवदत्ता । ' ख. पाठः. १० 'दाळिआए समीपे वी' ख. पाठः. ११ 'दा । राजा—किमि' ख. पाठः.

राजा — कथमुत्पन्नोऽस्या गान्धर्वेऽभिलाषः ।

देवी — (क) केण वि किळ उग्घादेण कञ्चणमाळं वीणाजोग्गं करअन्तिं पेक्खिअ सिक्खिदुकामा आसी ।

राजा — सदृशं बाल्यस्य ।

देवी — (ख) महासेणं वि किं वि विण्णविदुकामा ह्मि ।

राजा — किमिति ।

देवी — (ग) आअ[1]य्यं इच्छामि त्ति ।

राजा — उपस्थितविवाह[2]कालायाः किमिदानीमाचार्येण । पतिरेवैनां शिक्ष[3]यिष्यति ।

देवी — (घ) हं एसो दाणि मे दारिआए[4] काळो ।

राजा — भोः ! नित्यं प्रदी[5]यतामित्यस्मानुपरुध्य किमिदानीं सन्तप्यसे ।

देवी — (ङ) अभिप्पेदं मे पदाणं । विओओ मं सन्तावेदि । अ[6]ह कस्स उण दिण्णा ।

राजा — न तावन्निश्चयो गम्यते ।

---

(क) केनापि किलोद्धातेन काञ्चनमालां वीणायोग्यां कुर्वतीं प्रेक्ष्य शिक्षितुकामासीत् ।

(ख) महासेनमपि किमपि विज्ञापयितुकामास्मि ।

(ग) आचार्यमिच्छामीति ।

(घ) हम् एष इदानीं मे दारिकायाः कालः ।

(ङ) अभिप्रेतं मे प्रदानम् । वियोगो मां सन्तापयति । अथ कस्मै पुनर्दत्ता ।

---

१ 'चअं इ' ख. पाठः. २. 'हाया.' ख. पाठः. ३. 'क्षति' ख. पाठः. ४. 'ए सो का' ख. पाठः. ५. 'ती' क. पाठः. ६. 'इ' ख. पाठः.

**देवी** —(क) इदाणिं पि ण दाव ।

**राजा** —

अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्म[१]स्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता । एषं[२] चापरः काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोभयति मां चारित्रेण । (आत्मगतम्) न किञ्चिदाहँ[३] । अश्रुपूर्वाभ्याकुला कथं निश्चयं गमिष्यति । भवतु, निवेदयाम्यस्यै । (प्रकाशम्) श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता राजानः ।

**देवी** —(ख) किं दाणि वित्थरेण । जहिं दइअ ण सन्तप्पामो, तहि दीअदु ।

**राजा** — अहो महान् खलु लीलाभिहितो[४] दुःखविस्तर इदानीं पश्चादुपालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्चयं गच्छतु । श्रूयताम्,

अस्मत्सम्बद्धो मागधः काशिराजो
वाङ्गः सौरा[५]ष्ट्रो मैथिलः शूरसेनः ।
एते ना[६]नार्थैर्लोभयन्तो गुणैर्मां
कस्[७]ते वैतेषां[८] पात्रतां याति राजा ॥ ८ ॥

---

(क) इदानीमपि न तावत् ।

(ख) किमिदानीं विस्तरेण । यत्र दत्त्वा न सन्तप्यामहे, तत्र दीयताम् ।

---

१. 'ह' ख. पाठः. २. '॰ोऽप' ख. पाठः. ३. 'ह । दे' क. पाठः. ४. 'वि तव नि' क. पाठः. ५. 'वीरो मै' ख. पाठः. ६. 'नार्थै' ख. पाठः. ७. 'स्तवैते' क. पाठः. ८. 'तु' ख. पाठः.

(प्रविश्य)

काञ्चुकीयः — वत्सराजः ।

राजा — किं वत्सराजः[1] ।

काञ्चुकीयः — प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

राजा — प्रियवचनमिति ।

देवी — (उत्थाय) (क) जेदु महासेणो ।

राजा[2] — (सहर्षम्) प्रियवचनपरिहार्यो[3] हि देवी[4] । आस्यताम् ।

देवी — (ख) जं महासेणो आणवेदि । (उपविशति)

राजा[5] — उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

काञ्चुकीयः[6] — (उत्थाय) तत्रभवताँमात्येन शालङ्कायनेन गृहीतो[7] वत्सराजः[8] ।

राजा — (सहर्षम्) किमाह[9] भवान् ।

काञ्चुकीयः — तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा — उदयनः ।

काञ्चुकीयः — अथकिम् ।

राजा — शतानीकस्य[10] पुत्रः ।

---

(क) जयतु महासेनः ।

(ख) यद् महासेन आज्ञापयाति ।

---

१. 'जम्' क. पाठः. २. 'जा—अयि प्रि' ख. पाठः. ३. 'र्यै दे' ख. पाठः. ४. 'वि' ख. पाठः. ५. 'जा — स्वै' ख. पाठः. ६. 'यः, त' ख. पाठः. ७ 'तो' ख. पाठः. ८. त्सः ।' क. पाठः. ९. 'किमुद' ख. पाठः.' १०. 'सहस्रानीकस्य नप्ता' ख. पाठः,

काञ्चुकीयः — दृढम्[1] ।

राजा — सहस्रानीकस्य[2] नप्ता ।

काञ्चुकीयः — स[3] एव ।

राजा — कौशाम्बीशः[4] ।

काञ्चुकीयः — सुव्यक्तम्[5] ।

राजा — गान्धर्ववित्तकः[6] ।

काञ्चुकीयः — एवं[7] ब्रुवन्ति ।

राजा[8] — वत्सराजो ननु ।

काञ्चुकीयः — अथकिं, वत्सराजः ।

राजा — अथ किमुपरतो यौगन्धरायणः ।

काञ्चुकीयः — न खलु, कौशाम्ब्यां किल

राजा — यद्येवं[9] न गृहीतो वत्सराजः ।

काञ्चुकीयः — श्रद्धत्तां[10] महासेनः ।

राजा —

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
    व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
    यौगन्धरायणमतानि च नः स्वनन्ति ॥ ९ ॥

---

१. 'एवम् ।' ख. पाठः. २. 'कौशाम्बीशः ।' ख. पाठः. ३. 'सुव्यक्तम् ।' ख. पाठः. ४. 'गन्धर्ववित्तकः ।' ख. पाठः. ५. 'एवं ब्रुवन्ति ।' ख. पाठः. ६. 'वत्सराजो ननु ।' ख. पाठः. ७. 'अथकिम् ।' ख. पाठः. ८. 'जा—अथैकापर' ख. पाठः. ९. 'तस्मान्न' क. पाठः. १०. 'द्धा म' क. पाठः.

**काञ्चुकीयः**—प्रसीदतु महासेनः । वृद्धो[1]ऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् ।

**राजा**—आ अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषितः ।

**काञ्चुकीयः**—न पुरुषः । जवातिशययुक्तेन खररथेन वत्सराजमग्रतः कृत्वा स्वयमेवामात्यः प्राप्तः ।

**राजा**[2]—एवं प्राप्तः । हन्त भोः! अद्य विमुक्तसन्नाहा[3] सुखं विश्राम्य[4]त्वक्षौहिणी[5] । अद्यप्रभृति प्रच्छन्नदूत[6]कृतसम्प्रेषणा[7] अशङ्किताः स्थास्यन्ति राजानः । एष समासः । अद्यास्मि महासेनः ।

**देवी**—(क) किं अमच्चेण आणीदो ।

**राजा**—अथकिम् ।

**देवी**—(ख) एदण्णिमित्तं कस्स वि ण दिस्सामो वासवदत्तं ।

**राजा**—युद्धावजितशत्रुः खल्वेष मम । बादरायण! शालङ्कायनः क्व ।

**काञ्चुकीयः**—आ[8]हितो भद्रद्वारे ।

---

(क) किममात्येनानीतः ।

(ख) एतन्निमित्तं कस्मा अपि न दित्सामो वासवदत्ताम् ।

---

१. 'त्तो' ख. पाठः. २. 'जा–हन्त भोः! वि' ख. पाठः. ३. 'हः' ख. पाठः. ४. 'मयत्व' ख. पाठः. ५. 'णीम् ।' ख. पाठः. ६. 'तस' ख. पाठः. ७. 'णाशङ्कितास्थानः क्व' क. पाठः. ८. 'आस्थितो द्वा' ख. पाठः.

**राजा** — गच्छ । भरतरोहकं ब्रूहि — कुमारविधिविशिष्टेन सत्कारेण वत्सराजमग्रतः कृत्वा प्रवेश्यताममात्य इति ।

**काञ्चुकीयः** — यदाज्ञापयति महासेनः ।

**राजा** — एहि तावत् ।

**काञ्चुकीयः** — अयमस्मि ।

**राजा** — वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः ।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः ।
सिंहमन्तर्गतामर्षं यज्ञार्थमिव संयतम् ॥ १० ॥

**काञ्चुकीयः** — यदाज्ञापयति महासेनः । (निष्क्रान्तः)

**देवी** — (क) बहूणि अब्भुदआणि इमस्सिं राअउळे अणुभूदाणि[1] । ण खु अहं ईदिसं[2] पीदिजोग्गं महासेणस्स[3] सुमरामि ।

**राजा** — अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, यथा गृहीतो वत्सराज इति ।

**देवी** — (ख) वच्छराओ णं[4] ।

**राजा** — अथकिम् ।

**देवी** — (ग) बहूणि सम्बन्धप्पओअणागदाणि[5] राअउळाणि सुदाणि[6] । एदिणा ण पेसिदपुरुवो[7] पुरुसो ।

---

(क) बहवोऽभ्युदया अस्मिन् राजकुलेऽनुभूताः । न खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि ।

(ख) वत्सराजो ननु ।

(ग) बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि । एतेन न प्रेपितपूर्वः पुरुषः ।

---

१. 'हू' ख. पाठः. २. 'ए' ख. पाठः. ३. 'णं सु' ख पाठः. ४. 'ण' क. पाठः. ५. 'द्धओअराणि' ख. पाठः, ६. 'गआणि' ख. पाठः. ७. 'सिपु' ख. पाठः.

राजा—देवि! महासेनशब्दमपि न गणयति । किं सम्ब- [illegible] ।

देवी—[illegible] गणेदि । किं बाळो अपण्डिदो वा ।

राजा—बालो, न त्वपण्डितः ।

देवी—(ख) किणुहु एणं उस्सेअदि ।

राजा—[illegible]त्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरस- [illegible] वंशः । दर्पयत्येनं *दायाद्यागतो गान्धर्वो वेदः । [illegible] वयस्सहजं रूपं । विस्रम्भयत्येनं कथमप्यु- त्पन्नो[illegible] ।

देवी—(ग) अभिळासणीआ वरगुणा । कस्स वामदाए दोसो संवुत्तो ।

राजा—[illegible]नीमस्थाने विस्मितासि । पश्य,

> [illegible] इवोत्सृष्टो दहन् कार्त्स्न्येन मेदिनीम् ।
> अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

---

(क) न गणयति । कि[illegible] बाल. अपण्डितो वा ।

(ख) किन्नु [illegible]मुत्सेकयति ।

[illegible]गुणाः । कस्य वामतया दोषः संवृत्तः ।

---

[illegible] २. 'णो—कि' ख. पाठः. ३. 'वं' ख. पाठः. ४. 'आ [illegible] ५. [illegible] क. पाठः. ६. 'जा—देवि! कि' ख. पाठः. ७. [illegible] 'ता' ग. पाठः. ८. 'महान्' ख. पाठः. ९. 'द्य' ख. पाठः.

---

* [illegible] स्वदाग्नि देवश्रवा देववातः सुदक्षम्' (ऋग्वे. अष्ट. ३. अध्या. १. [illegible] वंशपरम्पराप्राप्त इत्यर्थः ।

(प्रविश्य)

**काञ्चुकीयः** — जयतु महासेनः [illegible] प्रविष्टः शालङ्कायनः[4]। स तु विज्ञापयति— [illegible] वत्सराजकुले[5] द्रष्टव्यं घोषवती नाम [illegible] हयितव्य[7] इति[8] । (वीणां दर्शयति)

**राजा** — प्रतिगृहीतं जयमङ्गलम् । [illegible] घोषवती नाम[10] । यैषा,

श्रुतिसुखमधुरा स्वभावरक्ता
करजमुखोल्लिखिताग्रघृष्टतन्त्री[11] ।
ऋषिवचनगतेव मन्त्रविद्या
गजहृदयानि बलाद् वशीकरोति ॥ [illegible] ॥

भोः! समरावजितानां[12] रत्नानामिष्टसम्भोगः [illegible] ।

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः [illegible] ।
†गान्धर्वद्वेषी व्यायामषाली चाप्यनुपालकः [illegible] ॥

क्वनुखल्वियं सुन्यस्ता भवेत् । देवि! [illegible] क्रान्ता ननु ।

**देवी**[13] — आम ।

---

१. 'थाप्र' क. ख. पाठः. २. 'क्तः रात्कारः प्रविष्टः ना' ख. [illegible] पाठः. ४. 'नो वि' ग. पाठः. ५. 'ल्द्र' ख. पाठः. ६. [illegible] पाठः ७. 'व्यम् इ' क. ख. पाठः. ८. 'ति । रा' ख. पाठः. ९. [illegible] पाठः. १०. 'म । श्रु' ख. पाठः. ११. 'ह' ख. पाठः. १२ 'नामि' [illegible] १३. [illegible]—वीणा' ख. पाठः.

---

† 'गान्धर्वदूषी' इति श्राव्यः पाठः । प्रह्वद्वा द्वशब्दो द्रष्टव्यः ।

राजा — तेन हि इयमस्यै प्रदीयताम् ।

देवी — (क) वीणाप्पदाणेण भूओ वि उम्मत्ता विअ चिट्ठदि ।

राजा — क्रीडतु क्रीडतु । नैतत् सुलभं श्वशुरकुले । बादरायण! क्व स[1]ः ।

काञ्चुकीयः — अमात्येन सह[2] प्रविष्टः ।

राजा — अथ वत्सेष्वधिकृत[3]ः ।

काञ्चुकीयः — आहितविनयत्वा[4]त् पादयोरङ्के तस्य बहुप्रहारत्वाच्च स्कन्ध[5]वाह्येन शयनीयेन मध्य[6]मगृहं प्रवेशितः ।

राजा — हा धिग्, बहुप्रहा[7]रः । एष इदानीं निरुप[8]स्कृतस्य तेजसो दोषः । नृशंसः खल्व[9]स्मिन् काल उपेक्षितवान् । बादरायण! गच्छ । भरतरोहकं ब्रूहि — क्रियतामस्य व्रण[10]प्रतिकर्मेति ।

काञ्चुकीयः — यदाज्ञापयति महासेनः ।

राजा — अथवा एहि तावत् ।

काञ्चुकीयः — अयमस्मि ।

राजा — [11]अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम् । आकारसूचिता अस्य प्रीतयो विज्ञेयाः । अतिक्रान्तविग्रहाश्रिताः

(क) वीणाप्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति ।

१ 'सा' ख. पाठः. २. 'ह्योपविष्टा ।' ख. पाठः. ३. 'ता क्व ।' ख. पाठः. ४. 'त्वा...... योरदूरगतत्वा' (?) ख. पाठः. ५. 'न्धावानेश' ख. पाठः. ६. ध्यगृ ख. पाठः. ७. 'कार इ' क. पाठः. ८. 'पद्रवस्तुत' ख. पाठः. ९. 'त्वका' ख. पाठः. १०. 'णक' ख. पाठः. ११. 'अविरक्तसत्कारमतिसत्कारमतिग' क. पाठः.

कथा न कथयितव्याः । क्षु[1]तादिप्रयोगेष्वाशिषो[2]ऽभिधेयाः । कालसंवादिना स्तवे[3]नार्च्यः ।

**काञ्चुकीयः** — यदाज्ञापयति महासेनः । (निष्क्रम्य प्रविश्य) जयतु महासेनः । पथ्येव कृतव्रण[4]प्रतिकर्मा वत्सराजः । अकालस्तावदिदानीं द्वितीयस्य प्र[5]तिकर्मणे[6] इति । मध्याह्नमारोहति दिवाकरः ।

**राजा** — अथ कस्मिन् प्रदेशे वीरमानी ।

**काञ्चुकीयः** — मयूरयष्टिमुखे ।

**राजा** — हा धिग् , अनाश्रयणीयः खल्वयं देशः । आतपप्रा[7]तिकूल्यार्थं मणिभूमिकायां प्रवेशयेत्याज्ञापय ।

**काञ्चुकीयः** — यदाज्ञापयति महासेनः । (निष्क्रम्य प्रविश्य) [8]यदाज्ञप्तं महासेनेन, तत् सर्वमनुष्ठितम् । अमात्यस्तु भरतरोहको महासेनं द्रष्टुमिच्छति[9] ।

**राजा** — व्यक्तं न रोचते[10] तस्य वत्सराजसत्क्रिया । अस्यैष[11] नीतेः परिश्रमः । अहमेवैनमनुनयामि ।

**देवी** — (क) किं सम्बन्धो णिच्चिदो ।

---

(क) किं सम्बन्धो निश्चितः ।

---

१. 'बन्धुजनप्र' ग. पाठः. २. 'षाभिधेयः । का' ग. पाठः. ३. 'न वाच्यः ।' क. ख. पाठः. ४. 'णक' ख. पाठः. ५. 'व्रणक' ख. पाठः. ६. 'णः । म' ख. पाठः. ७. 'प्रतिकूलार्थं' ख. पाठः. ८. 'जयतु महासेनः । त' ख. पाठः. ९. 'ति । व्यक्तं' ख. पाठः. १०. 'तेऽस्य' क. पाठः. ११. 'स्यैव नी' ख. पाठः.

राजा — न तावन्निश्चयो गम्यते ।

देवी — (क) अळं दाणि तुवरिअ । बाळा मे दारिआ ।

राजा — यद[1]भिरुचितं भवत्यै[2] । प्रविशत्वभ्यन्तरम् ।

देवी — (ख) जं महासेणो आणवेदि । (निष्क्रान्ता[3] सपरिवारा)

राजा — (विचिन्त्य)

पूर्वं तावद् वैरमस्यावलेपा-
दानीतेऽस्मिन् स्यात् तु वै[4]ध्यस्तथा मे ।
युद्धक्लिष्टं संशयस्थं विपन्नं
श्रुत्वा त्वे[5]नं संशयं चिन्तयामि ॥ १४ ॥

(निष्क्रान्तौ)

द्वितीयोऽङ्कः ।

---

(क) अलमिदानीं त्वरित्वा । बाला मे दारिका ।

(ख) यन्महासेन आज्ञापयति ।

---

१. 'दा' ख. पाठः. २. 'त्यै तदा भवतु प्र' ख पाठः. ३. 'न्ता)' ख. पाठः. ४. 'मध्यस्थता मे' क. ख. पाठः. ५. 'ह्ये' ख. पाठः.

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति डिण्डिकवेषो[1] विदूषकः)

विदूषकः[2] —(निरूप्य) (क) भो! देवउळपीठिआए मम मोद-अमह्ळअं णिक्खिविअ दक्खिणमासआ[3]णि गणिअ बन्धिअ प[4]डिणिवुत्तो दाणि मोदअमह्ळअं ण पेक्खामि[5] । (विचिन्त्य) आ ए[6]कमोदअपरितोसिदो ण दाव ओळग्गो मं अणुसरदि । उच्चदाए पाआरस्स अगई कुक्कुराणं । अक्खदभत्तदाए अळोहणीअं पहिआणं । आदु अपि णं खाआमि । भोदु ओग्गारइस्सं दाव अहं । ही ही बुड्ढो[7] विअ सूअरवत्थी[8] सुद्धवादं एव्व उग्गिरामि । अहव ळोहिदकच्चाअणीए केरअं मम केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे[9] । (निरूप्य) जदि वि एसो बह्मआरी बहुकेहि रूवेहि अविणअं करेदि । भोदु पेक्खिस्सं दाव अहं[10] । भो!

---

(क) भोः! देवकुलपीठिकायां मम मोदकमल्लकं निक्षिप्य दक्षिणामाषकाणि गणयित्वा बद्ध्वा प्रतिनिवृत्तः इदानीं मोदकमल्लकं न पश्यामि । आ एकमोदकपरितोषितो न तावदवलग्नो मामनुसरति । उच्चतया प्राकारस्यागतिः कुक्कुराणाम् । अक्षतभक्ततया-लोभनीयः पथिकानाम् । अथवा अप्येनं खादामि । भवतु उद्गारयिष्ये तावदहम् । ही ही वृद्ध इव सूकरवस्तिः शुद्धवातमेवोद्गिरामि । अथवा लोहितकात्यायन्याः सम्बन्धी मम सम्बन्धीति कृत्वा शिवेन प्रतिहस्तीकृतो भवेत् । यद्यप्येष ब्रह्मचारी बहुकै रूपैरविनयं करोति । भवतु द्रक्ष्यामि तावदहम् । भोः ! एष खलु मम मोदकमल्लकः शिव-

---

१. 'षप्रच्छन्नो वि' ख. पाठः. २. 'कः—भो' ख. पाठः. ३. 'आ ग' पाठः. ४. 'रिवु' ख. पाठः. ५. 'मि । (आत्मगतम्) ए' ख. पाठः. ६. 'क' ख. पाठः. ७. 'घो' ख. पाठः. ८. 'पन्थी' ख. पाठः. ९. 'वे । ज' ख. पाठः. १०. 'अहं । अविहा एदस्स मम मोदअं सि' ख. पाठः.

एदं खु मम मोदअमल्लअं सिवस्स पादमूले चिट्ठइ । जाव णं गह्लामि । देहि भट्टा! देहि मे मोदअमल्लअं। भट्टा! तुवं वि मम चोरो सि। अविहा आलिहिदं[1] खु[2] मम मोदअमल्लअं[3]। संदावतिमिरेण[4] सुट्ठु ण पेक्खामि। भोदु पमज्जिस्सं दाव अहं। ही ही साहु[5] ले चित्तअर! भाव! साहु। जुत्तलेहदाए वण्णाणं जह जह पमज्जामि, तह तह उज्जलदरं होइ। भोदु उदएण पमज्जिस्सं। कहिंणुहु उदअं। इदं सोहणं सुद्धतडाअं। अहं विअ सिवो वि दाव एदस्सिं मोदअमल्लए णिरासो होदु।

(नेपथ्ये)

मोदआ! मोदआ! हहह ।

**विदूषकः**—(क) अविहा एसो उम्मत्तओ मम मोदअमल्लअं गह्लिअ हसमाणो फेणा[6]यमाणमलिणवरिसारच्छोदअं विअ इदो एव्वाहावइ[7]। चिट्ठ चिट्ठ उम्मत्तअ! चिट्ठ। इमिणा दण्डअट्ठेण सीसं दे भिन्दामि[8]।

---

स्य पादमूले तिष्ठति। यावद् एनं ग्रहीष्यामि । देहि भर्तः! देहि मे मोदकमल्लकम्। भर्तः! त्वमपि मम चोरोऽसि। अविहा आलिखितः खलु मम मोदकमल्लकः। सन्तापतिमिरेण सुष्ठु न पश्यामि । भवतु प्रमार्जिष्यामि तावदहम्। ही ही साधु रे चित्रकर! भाव! साधु। युक्तलेखतया वर्णानां यथा यथा प्रमार्ज्मि तथा तथोज्ज्वलतरं भवति। भवतु उदकेन प्रमार्जिष्यामि। कुत्र खलूदकम्। इदं शोभनं शुद्धतटाकम्। अहमिव शिवोऽपि तावद् एतस्मिन् मोदकमल्लके निराशो भवतु। मोदका! मोदकाः!। हहह ।

(क) अविहा एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसन् फेनायमानमलिनवर्षारथ्योदकमिवेत एवाधावति । तिष्ठ तिष्ठोन्मत्तक! तिष्ठ। अनेन दण्डकाष्ठेन शीर्षं ते भिनद्मि।

---

१. 'लिदं' क. पाठः. २. 'दं म' ख. पाठः. ३. 'अं भो' क. पाठः. ४. 'ण ण' क. ख. पाठः. ५. 'उ' ख. पाठः. ६. 'ला' ख. पाठः. ७. 'व्वाअच्छइ' ख. पाठः. ८. 'दं दे मिदामि' ख. पाठः.

(ततः प्रविशत्युन्मत्तकः)

**उन्मत्तकः**—(क) मोदआ! मोदआ! हहह[1] ।

**विदूषकः**—(ख) भो उम्मत्तअ! आणेहि मम मोदअमळअं ।

**उन्मत्तकः**—(ग) किं मोदआ । कहिं मोदआ । कश्श मोदआ । किं इमे मोदआ उज्झन्ति, आदु पेणज्झन्ति[2], उदाहो खज्जन्ति ।

**विदूषकः**—(घ) ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ ।

**उन्मत्तकः**—(ङ) एसा[3] खु मम रसणा खाइदुकामा ळिङ्गाणि करेदि[4] ।

**विदूषकः**—(च) भो उम्मत्तअ! आणेहि मम मोदअमळअं । मा परकेरए सिणेहं करिअ ओवज्झेहि ।

**उन्मत्तकः**—(छ) के के[5] मं वज्झन्ति । मोदआ खु मं रक्खन्ति ।

---

(क) मोदका! मोदकाः! हहह ।

(ख) भो उन्मत्तक! आनय मम मोदकमल्लकम् ।

(ग) किं मोदकाः। कुत्र मोदकाः । कस्य मोदकाः । किमिमे मोदका उत्सृज्यन्ते, अथवा प्रणीयन्ते, उताहो खाद्यन्ते ।

(घ) न खाद्यन्ते न खाद्यन्ते नोत्सृज्यन्ते च ।

(ङ) एषा खलु मम रसना खादितुकामा लिङ्गानि करोति ।

(च) भो उन्मत्तक! आनय मम मोदकमल्लकम् । मा परकीये स्नेहं कृत्वा अपबाध्यस्व (अथवा)अपोह्यस्व ।

(छ) के के मां बाधन्ते (अथवा) वहन्ति । मोदकाः खलु मां रक्षन्ति ।

---

१. 'ह । मोदआ! मोदआ! ग. पाठः. २. 'वि' ग. पाठः. ३. 'सो' ख. पाठः. ४. 'मि' ख. पाठः. ५. 'केके' ख. ग. पाठः.

णेवच्छविसेसमण्डिदा[1] पीदिं[2] उप्पादेदुं उवट्ठिआ।
ळाअगिहदिण्णमुळ्ळिआ काळवसेण मुहुत्तदुब्बळा॥ १॥

विदूषकः—(क) भो उम्मत्तअ! आणेहि मम मोदअमळ्ळअं। इमिणा पैच्चएण[3] उवज्झाअउळं गन्तव्वं।

उन्मत्तकः—(ख) मए वि इमिणा पैच्चएण[4] जोअणसदं गन्तव्वं।

विदूषकः—(ग) किं एळावणे तुवं।

उन्मत्तकः—(घ) आम एळावणे अहं। ण हु[5] दावं[6] देवळाजो मं आशणं आळुहदि। शुदं च मए पाँदपाशिएहि इन्दे वज्झ[7] त्ति[8] धाराणिअळेहिं[9] विज्जुम्मईहि कशाहि ताळिअ वाँउब्भामेण[10] परिब्भमन्तेण[11] भिन्दीअदि मेहबन्धणं।

---

नैपथ्यविशेषमण्डिताः प्रीतिमुत्पादयितुमुपस्थिताः।
राजगृहदत्तमूल्याः कालवशेन मुहूर्तदुर्बलाः॥

(क) भो उन्मत्तक! आनय मम मोदकमल्लकम्। अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम्।

(ख) मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम्।

(ग) किमैरावणस्त्वम्।

(घ) आम ऐरावणोऽहम्। न खलु तावद् देवराजो मामासनमारोहति। श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति धारानिगलैः विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण परिभ्रमता भिद्यते मेघबन्धनम्।

---

१. 'आ' ख. पाठः. २ 'प्रीदिं' ख. पाठः. ३. 'वेच्चेण' ख. पाठः. ४. 'वच्चेण' ख. पाठः. ५. 'दु' ख. पाठः. ६. 'व म' ख. पाठः. ७. 'प' ख. पाठः. ८. 'न्ति' ख. पाठः. ९. 'हि वान्त दे वि' ग. पाठः. १०. 'बाहुभामे तुवं' ख. पाठः. ११. 'न्ति जेण भि' ग. पाठः.

**विदूषकः** — (क) भो उम्मत्तअ! ण तुवं मम दइस्सिसि, विळविस्सं दाव अहं ।

**उन्मत्तकः** — (ख) विळव विळव विक्कोस वा विळवं[1] ।

**विदूषकः** — (ग) अब्बम्मण्णं भो! अब्बम्मण्णं ।

**उन्मत्तकः** — (घ) अहं पि विळविस्सं । इन्दे वज्झे[2] भो! इन्दे वज्झे भो[3]! ।

**विदूषकः**[4] — (ङ) अब्बम्मण्णं भो! अब्बम्मण्णं ।

(नेपथ्ये)

(च) मा भाआहि मा भाआहि बह्मणाउस! मा भाआहि ।

**विदूषकः**[5] — (सहर्षम्) (छ) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि । अघं बह्मणभावं । ईहामत्तेएण[6] शमणएण अभअं[7] दीअदि ।

---

(क) भो उन्मत्तक! न त्वं मम दास्यसि, विलपिष्यामि तावदहम् ।

(ख) विलप विलप विक्रोश वा विलप ।

(ग) अब्रह्मण्यं भो! अब्रह्मण्यम् ।

(घ) अहमपि विलपिष्यामि । इन्द्रो बद्धो भो! इन्द्रो बद्धो भो! ।

(ङ) अब्रह्मण्यं भो! अब्रह्मण्यम् ।

(च) मा बिभीहि मा बिभीहि ब्राह्मणोपासक! मा बिभीहि ।

(छ) आगते चन्द्रे समागतानि सर्वनक्षत्राणि । धिग् ब्राह्मणभावम् । ईहामात्रकेण श्रमणकेनाभयं दीयते ।

---

१. 'वं अब्व' ख. पाठः. २. 'ज्झे हो ने' ख. पाठः. ३. 'भो । मा' ग. पाठः. ४. 'कः अघं' ख. पाठः. ५. 'कः–अघं' ख. ग. पाठः. ६. 'त्तेण' ख. पाठः. ७. अद्दीअदिं । आअदे हिं चंद्दे समाअदाणि सव्वणक्खत्ताणि । (त' ख. ग. पाठः.

(ततः प्रविशति श्रमणकः)

**श्रमणकः**—(क) मा भाआहि मा भाआहि बह्मणाउस! मा भाआहि। के[1]के इह, किं कय्यं, विळवदि।

**विदूषकः**—(ख) अविहा पडिहार[2]रक्खअउत्तिं खु समणओ अणुहोदि। भो समणअ! भअवं! एसो उम्मत्तओ मम मोदअमळ्ळअं गह्णिअ ण देदि।

**श्रमणकः**—(ग) मोदअं पेक्खामि दाव।

**उन्मत्तकः**—(घ) पेक्खदु पेक्खदु समणअ! भवं।

**श्रमणकः**—(ङ) थुं थु।

**विदूषकः**—(च) हद्धि उम्मत्तअस्स हत्थे ईहामत्तेएण [6]शमणएण थुत्थूकिदा अधण्णस्स मम मोदआ दिट्ठपुरुवा एव संवुत्ता।

---

(क) मा बिभीहि मा बिभीहि ब्राह्मणोपासक! मा बिभीहि। के के इह, किं कार्यं, विलपति।

(ख) अविहा प्रतीहाररक्षकवृत्तिं खलु श्रमणकोऽनुभवति। भोः श्रमणक! भगवन्! एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा न ददाति।

(ग) मोदकं प्रेक्षे तावत्।

(घ) प्रेक्षतां प्रेक्षतां श्रमणक! भवान्।

(ङ) थु थु।

(च) हा धिग् उन्मत्तकस्य हस्ते ईहामात्रकेण श्रमणकेन थुत्थूकृता अधन्यस्य मम मोदका दृष्टपूर्वा एव संवृत्ताः।

---

१. 'केके' ख. ग पाठः. २. 'रक्खअप्पउ' क. ख. पाठः. ३. 'भअवं' ख. पाठः. ४. 'थुत्थु' ख. पाठः. ५. 'त्तेण' ख. पाठः. ६. 'म' ख. पाठः. ७. 'वा सं' ख. पाठः.

**श्रमणकः**[1] — (क) भो उम्मत्तआउस! णीआदेहि णीआदेहि[2]। एदाणि मोदआणि कत्थूळिआफेणपण्डराणि[3] बहुच्चिट्ठसमिद्ध-[4] कोमळा णिट्ठाणिआ सुरा विअ महुराणि मा दे खाइदाणि खअं उप्पादेन्ति[5] ।

**विदूषकः** — (ख) अविहा मोदआणि त्ति करिअ किण्डि-[6] ळळज्जुआ मे पडिच्छिदा ।

**श्रमणकः** — (ग) उम्मत्तआउस! णीआदेहि णीआदेहि । जदि ण णीआदेहि, तुवं सवेमि ।

**उन्मत्तकः** — (घ) पशीददु पशीददु शमणअ! भअवं[7]! मा खु मा खु मं शविदुं । गह्ण गह्ण[8] ।

**श्रमणकः** — (ङ) बह्मणाउस! पेक्ख पेक्ख ममप्पभावं ।

---

(क) भो उन्मत्तकोपासक! निर्यातय निर्यातय एतानि मोदकाः कस्तूरिकाफेन-पाण्डरा वधूच्छिष्टसमृद्धकोमला निष्ठानिता सुरेव मधुरा मा ते खादिताः क्षयमुत्पादयन्ति ।

(ख) अविहा मोदका इति कृत्वा (किण्डिळळज्जुआ?) मे प्रतीष्टा ।

(ग) उन्मत्तकोपासक! निर्यातय निर्यातय। यदि न निर्यातयसि त्वां शपामि।

(घ) प्रसीदतु प्रसीदतु श्रमणक! भगवन्! माखलु माखलु मां शप्तुम् । गृहाण गृहाण ।

(ङ) ब्राह्मणोपासक! प्रेक्षस्व प्रेक्षस्व मम प्रभावम् ।

---

१. 'कः – उ' ख. पाठः २. 'हे' ख. पाठः. ३. 'णि इम्भुविट्ठ' क. पाठः. ४. 'ध' ख. पाठः. ५. 'दबन्ति' ख. पाठः. ६. 'कीडतु पुड्डुआ' ख. पाठः. ७. 'भवं' ख. पाठः. ८. 'ह्न । याहु' क. पाठः.

**विदूषकः**—(क) एसो उम्मत्तओ एदेण ईहामत्तएण समणएण उज्झिदं सावं पेक्खिअ मोदअमळ्ळअं भीदभीदं अग्गङ्गुळिआए पसारिदाए ठाविअ चिट्ठइ ।

**श्रमणकः**[1]—(ख) यादु यादु भवं । एदेहि मोदएहि मं सोत्थि वा[2]चिइस्सासि ।

**विदूषकः**—(ग) ही ही ममकेरएहिं सोत्थि वाआएमि । मए वि कोडुम्बिअस्स ह[3]त्थादो पडिग्गहगहीदाणि । [4]ताणि भवदो वि उवाअणं भविस्सदि । सो वि सम्मिद्धो होदु । [6]एसो उम्मत्तओ अग्गिगिहं अहिमुहो गच्छइ । ट्ठिदो मज्झ[5]ह्लो । पुव्वह्ले वि दाव अअं देसो सुण्णो भविस्सदि । जाव अहं वि इमाणि दक्खिणामासआणि [7]मग्गगेहे णिक्खिविअ गच्छामि । एकस्स [9]शाडिआए कय्यं अवरस्स मुळ्ळेण । (सर्वे अग्निगृहं प्रविशन्ति)

---

(क) एष उन्मत्तक एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति ।

(ख) यातु यातु भवान् । एतैर्मोदकैर्मां स्वस्ति वाचयिष्यासि ।

(ग) ही ही मदीयैः स्वस्ति वाचयामि । मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि । तानि भवतोऽप्युपायनं भविष्यति । सोऽपि समृद्धो भवतु । एष उन्मत्तकोऽग्निगृहमभिमुखो गच्छाति । स्थितो मध्याह्नः । पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति । यावदहमपीमानि दक्षिणामाषकाणि मार्गगेहे निक्षिप्य गच्छामि । एकस्य शाटिकया कार्यमपरस्य मूल्येन ।

---

१. ‘कः–एदु’ ख. पाठः. २. ‘वाएमि ।’ ख. पाठः. ३. ‘अ’ ख. पाठः. ४. ‘एदाणि मोदआणि सो सो’ ख. पाठः. ५. ‘ज्झे’ ख. पाठः. ६. ‘ह्लो दा’ ख. पाठः. ७. ‘सग्गिगेहे ख. ग. पाठः. ८. ‘क्खिअ’ क. पाठः. ९. ‘विघ्नः ।’ ख. ग. पाठः.

**यौगन्धरायणः** — वसन्तक ! शून्यमिदमग्निगृहम् ।

$**विदूषकः** — (क) [1]आम भो ! सुण्णं खु इदं ।

**यौगन्धरायणः** — तेन हि परिष्वजेतां भवन्तौ ।

[2]**उभौ** — बाढम् । (परिष्वजेते)

**यौगन्धरायणः** — भवतु भवतु तुल्यपरिश्रमौ भवन्तौ । आस्तां भवान् । भवानप्यास्ताम्[3] ।

**उभौ** — [4]बाढम् ।

(सर्वे उपविष्टाः[5])

**यौगन्धरायणः** — वसन्तक ! अपि दृष्टस्त्वया स्वामी ।

**विदूषकः**[6] — (ख) आम भो ! दिट्ठो तत्तभवं ।

**यौगन्धरायणः** — हन्त भोः । अतिक्रान्तयोगक्षेमा रात्रिः । दिवस इदानीं प्रतिपाल्यते[7] ।

अहः समुत्तीर्य निशा प्रतीक्ष्यते
शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां
गतं गतं कालमवेक्ष्य निर्वृतिः ॥ २ ॥

**रुमण्वान्** — सम्यग् भवानाह । तुल्येऽपि कालविशेषे निशैव बहुदोषा बन्धनेषु । कुतः,

---

(ग) आम भोः ! शून्यं खल्विदम् ।

(क) आम भोः ! दृष्टस्तत्रभवान् ।

---

१. 'आं' ख. पाठः.   २. '(उभौ प' क. ख पाठः.   ३. 'म् । (स' ख. पाठः.   ४. 'तह ।' ग. पाठः.   ५. 'विशन्ति । ' ख. पाठः.   ६. 'कः — दि' ख. पाठः.   ७. 'ते । कुतः, अ' ख. ग. पाठः.   ८. 'तां' ख. पाठः.

---

$ इत आरभ्य 'विदूषक' इत्यस्य स्थाने वसन्तक इति ग. पुस्तके दृश्यते ।

व्यवहारेष्वसाध्यानां लोके वाप्रतिर[1](ज्ज?ज्य)ताम् ।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥ ३ ॥

**यौगन्धरायणः**—वसन्तक! स्वामिना सह कथितं ननु।

**विदूषकः**[2]—(क) [3]आम भो! चिरं एव्व च ह्मि तत्तहोदा ओवज्झो, अज्ज चउद्दसीं ‡ह्लायमाणो पडिवालिदो अ।

**यौगन्धरायणः**—स्नातः स्वामी।

**विदूषकः**[4]—(ख) ह्लादो [5]अत्तभवम्।

**यौगन्धरायणः**—कृतं देवकार्यम्।

**विदूषकः**[6]—(ग) आम भो! पणाममत्तेण पूइदा देवदा।

**यौगन्धरायणः**[7]—एतामपि बहुमतामवस्थां प्राप्तः स्वामी। कुतः—

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति ॥ ४ ॥

**रुमण्वान्**—भवत इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः।

---

(क) आम भोः! चिरमेव चास्मि तत्रभवतापोढः, अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च।

(ख) स्नातोऽत्रभवान्।

(ग) आम भोः! प्रणाममात्रेण पूजिता देवताः।

---

१. 'राक्षतः।' ख. पाठः. २. 'कः– चि' ग. पाठः. ३. 'आं भो' ख. पाठः. ४. 'कः– आम भो! ह्ला' ग. पाठः. ५. 'त' ख. ग. पाठः. ६. 'कः– प. ग. पाठः. ७. 'णः– हन्त भोः! ए' ग. पाठः.

---

‡ स्नायमान इति 'ष्णा शौचे' इत्यस्य चानाशि रूपम्।

**यौगन्धरायणः**—वसन्तक! गच्छ भूयः स्वामिनं पश्य। विज्ञाप्यतां च स्वामी— या सा प्रयाणं प्रतीह प्रस्तुता कथा, तस्याः श्वः प्रयोगकालः[1]। स्थानावगाहयवसशय्याभोगेष्वाश्रयेषू[2]पन्यस्तौषधिव्याजो नलागिरिर्मन्त्रौषधिनियमसम्भृतपुराणकर्म[3]व्यामोहितः। अनुकूलमारुतमोक्तव्यः[4] सज्जितो धूपः। रोषप्रातिकूलोऽस्य सज्जितः[5] प्रतिगजमर्दः[6]। शालासन्निकृष्टमल्पसाधनं गृहमादीपयितुमग्नित्रासित्वाद् वारणानाम्। गजपतिचित्तोद्भ्रमणार्थं देवकुलेषु स्थापिताः शङ्खदुन्दुभयः। तेन नादेन सर्वसाधनपरिगतशरीरेणावश्यं श्वः प्रद्योतेन स्वामी शरणमुपगन्तव्यः। ततः स्वामिना शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सह व्यापन्नां घोषवतीं हस्तगतां कृत्वा नलागिरिः स्वाधीनः कर्तव्यः। ततो व्यवस्थितासनस्तदानीं स्वामी नलागिरौ। ततः,

[8]सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम्।
एकाहे व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशां
येनैष द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ॥ ४ ॥

इति[10]।

**रुमण्वान्**—वसन्तक! किमिदानीं[11] चिन्त्यते।

---

१. 'ल इति। कुतः स्था' ख. पाठः. २. 'भावेष्वा' क. पाठः. ३. 'र्मणि व्या' ख. पाठः. ४. 'व्यस' ख. पाठः. ५. 'ता' ख. पाठः. ६. 'र्दं' ख. पाठः. ७. 'नगृहादी' ख. पाठः. ८. 'ते' क. पाठः. ९. 'न्ता' क. पाठः. १०. 'ति। कुतः। व' ख. पाठः. ११. 'भवांश्चिन्तयति।' ख. पाठः.

विदूषकः—(क) एव्वं चिन्तेमि महन्तो खु भवदो पयत्तो विवज्जिस्सिदि त्ति ।

उभौ—न खलु वयं विज्ञातारः ।

विदूषकः—(ख) अहं पुठमं पच्चा भवन्तो ।

यौगन्धरायणः—अथ किंकृता कार्यविपत्तिः ।

विदूषकः—(ग) वच्छराअस्स अत्तकय्यदाए ।

यौगन्धरायणः—कथमिव ।

विदूषकः—(घ) सुणह भवन्तो ।

उभौ—अवहितौ स्वः ।

विदूषकः—(ङ) जा सा काळट्ठमी अदिक्कन्दा, तहिं तत्त-होदी वासवदत्ता णाम राअदारिआ धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ अवणीदकञ्चुआए सिविआए ओघट्टिदपणा-ळीपस्सुदसळिळविसमं राअमग्गं परिहरिअ जं तं बन्धणदुवारस्स

---

(क) एवं चिन्तयामि महान् खलु भवतः प्रयत्नो विपत्स्यत इति ।

(ख) अहं प्रथमं पश्चाद् भवन्तौ ।

(ग) वत्सराजस्यात्मकार्थतया ।

(घ) शृणुतां भवन्तौ ।

(ङ) या सा कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका धात्रीद्वितीया कन्यकादर्शनं निर्दोषमिति कृत्वापनीतकञ्चुकया शिबिकयावघट्टितप्रणालीप्रस्रुतसलिलविषमं राजमार्गं परिहृत्य यत्तद् बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतासीत् ।

---

१. 'न्तो । ता सुणह । उभौ' ख. पाठः.

अग्गदो भअवदीए[1] जक्खिणीए ट्ठाणं[2], तस्सिं देवकय्यं[3] कत्तुं गओ[4] आसी ।

**यौगन्धरायणः**— ततस्ततः ।

**विदूषकः**— (क) तदो तत्तभवं[5] तं दिअसं अब्भन्तरबन्धणपरिरक्खअं[6] सिवअं[7] णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो[8] ।

**उभौ**— ततस्ततः ।

**विदूषकः**— (ख) तदो पुरुसक्खन्ध[9]परिवट्टणट्ठिदाए सिविआए[10] पकामं दिट्ठा सा राअदारिआ ।

**यौगन्धरायणः**— ततस्ततः ।

**विदूषकः**— (ग) किं तदो तदो त्ति । बन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो[11] राअळीळं कत्तुं ।

**यौगन्धरायणः**— न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ।

---

(क) ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः ।

(ख) ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिबिकायां प्रकामं दृष्टा सा राजदारिका ।

(ग) किं ततस्तत इति । बन्धनमिदानीं प्रमदवनं संभाव्य प्रवृत्तो राजलीलां कर्तुम् ।

---

१. 'ए अवन्तिसुन्दरीए ज' क. पाठः. २. 'ठा' ख. पाठः. ३. 'कार्यं' ख. पाठः. ४. 'आसी' ख. पाठः. ५. 'वं वि तं' ख. पाठः. ६. 'मुखअ' ख. पाठः. ७. 'व णा' ख. पाठः. ८. 'णिब्बतो । यौगन्धरायणः—त' ख. पाठः. ९. 'कन्धरप' ख. पाठः. १०. 'ए अ मुहुत्तअं प' ख. पाठः. ११. 'त्तो ली' ख. पाठः.

**विदूषकः** — (क) भो! सञ्चआरिणो अणत्थ त्ति ईदिसं[1] एव्व ।

**यौगन्धरायणः** — सखे! रुमण्वन्! स्थिरीक्रियतामात्मा । अनेनैव वेषेण जरा गन्तव्या ।

**विदूषकः** — (ख) भो! अहं च एदेण उत्तो—भणेहि जोअन्धराअणस्स जहसमत्थिदा समत्थणा ण रोअदे मे । समाणे[2] गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि[3] । मा कामप्पधाण त्ति मं अवमण्णेहि । अवमाणस्स[4] अवजिदिं[5] अण्णेसामि[6] त्ति ।

**यौगन्धरायणः** — अहो शत्रुजनापहास्यमभिधानम् । अहो निरपत्रपता खलु बुद्धेः । अहो सुहृज्जनसन्तापकारणम् । अदेशकाले ललितं कामयते स्वामी । कुतः,

शक्ता[7] दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम्[8] ।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषै राजेति शब्दार्पनम् ॥ ५ ॥

---

(क) भोः! सञ्चारिणोऽनर्था इतीदृशमेव ।

(ख) भोः! अहं चैतेनोक्तः — भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवमन्यस्व । अवमानस्यावजितिमन्वेषे इति ।

---

१. 'डादेस्र सम.ण्णं विअ' ख. पाठः. २. 'णे प' ख. पाठः. ३ 'वीतीअ' ख. पाठः. ४. 'स्स खु अ' ख. पाठः. ५. 'दं' ख. पाठः. ६. 'मि । यौ' क. पाठः. ७. 'क्तादर्पयितुः स्व' ख. पाठः. ८. 'र्पणम्' क. पाठः.

**विदूषकः**—(क) भो! दंसिदो सिणेहो। णिव्विट्ठं पुरुसआरं। साहु उज्झिअ णं गच्छामो।

**यौगन्धरायणः**—वसन्तको भवान्ननु। वसन्तक! मा मैवम्।

परित्यजाम[1] सन्ततं दुःखेन मदनेन च।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते ॥ ६ ॥

**विदूषकः**—(ख) एव्वं एव्व जरं गमिस्सामो।

**यौगन्धरायणः**—तन्ननु श्लाघ्यम्।

**विदूषकः**—(ग) सिळाघणीओ भवे, जदि ळोओ जाणादि।

**यौगन्धरायणः**—न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः।

**विदूषकः**—(घ) सो वि दाव ण जाणादि।

**यौगन्धरायणः**—काले ज्ञास्यति।

**विदूषकः**—(ङ) कदमो दाणि सो काळो।

**यौगन्धरायणः**—यदेयमारम्भसिद्धिः।

---

(क) भोः! दर्शितः स्नेहः। निर्विष्टः पुरुषकारः। साधूज्झित्वैनं गच्छामः।

(ख) एवमेव जरां गमिष्यामः।

(ग) श्लाघनीयं भवेद्, यदि लोको जानाति।

(घ) सोऽपि तावन्न जानाति।

(ङ) कतम इदानीं स काळः।

---

१. 'मः' ख. पाठः.

**विदूषकः**—(क) तदो तादिसो भवं बन्धणादाराओणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु[1] ।

**रुमण्वान्**—इह भवता द्रष्टव्यः ।

**यौगन्धरायणः**—उभयमिति, बाढम् । इयं द्वितीया प्रतिज्ञा—

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ७ ॥

अपि च,

यदि* तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ८ ॥

(कर्णं दत्त्वा) अये शब्द इव[2] । ज्ञायतां शब्दः ।

**विदूषकः**—(ख) भो! तह । (निष्क्रम्य प्रविश्य) भो! पडिउत्तदिवसविस्सम्भेण अविरळं सञ्चरन्तो जणो दीसइ । किं दाणि करह्य ।

**रुमण्वान्**—तेन हि चतुर्द्वारमाग्निगृहं, भिद्यतां नः सङ्घातः ।

**यौगन्धरायणः**—न न । अभिन्नो नः सङ्घातः[3] । भिद्यतामरिसङ्घातः । (निष्क्रम्य)

---

(क) ततस्तादृशो भवान् बन्धनाद्राजानमन्तःपुराद्राजदारिकामुभे निर्यातयतु ।

(ख) भोस्तथा । भोः परिवृत्तदिवसविस्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः ।

---

१. 'दु । यौ' ख. पाठः. २. 'व । तूर्णं ज्ञा' ख. पाठः. ३. 'तः । स्वकार्यमनुष्ठीयताम् । उभौ — भो तह (निष्क्रान्तौ) उ' ख. पाठः.

---

* यदीति । तां घोषवतीं नाम वीणाम् । तं नडागिरिम् । तां वासवदत्ताम् ।

**उन्मत्तकः**[1]—(क) ही ही चन्दं गिळदि ळाहू । मुञ्च मुञ्च चन्दं[2] । यदि ण मुञ्चेशि, मुहं दे पाडिअ[3] मुञ्चावइस्सं । एशे एशे दुट्ठअश्शे पलिब्भट्टे आअच्छदि[4] । एशे एशे चउप्पहवीहिआअं । जाव णं आळुहिअ बळिं भक्खिस्सं । एशे एशे दाळअभट्टा[5] मं ताळेह । माखु माखु मं ताळेथ[6] । किं भणाशि—अह्माणं किं पि णच्चेहि त्ति । दक्खह दक्खह दाळअभट्टा[7] । एशे दाळअभट्टा पुणो वि[8] मं ताळेह इट्ठिआहि । माखु माखु ताळेथ । तेण हि अहं पि ताळेमि ।

(निष्क्रान्ताः)

**तृतीयोऽङ्कः ।**

---

(क) ही ही चन्द्रं गिलति राहुः । मुञ्च मुञ्च चन्द्रम् । यदि न मुञ्चसि, मुखं ते पाटयित्वा मोचयिष्यामि । एष एष दुष्टाश्वः परिभ्रष्ट आगच्छाति । एष एष चतुष्पथवीथ्याम् । यावदेनमारुह्य बलिं भक्षयिष्यामि । एते एते दारकभर्तारः ! मां ताडयत । माखलु माखलु मां ताडयत । किं भणसि अस्माकं किमपि नृत्येति । पश्यत पश्यत दारकभर्तारः ! । एते दारकभर्तारः ! पुनरपि मां ताडयत यष्टिभिः । माखलु माखलु ताडयत । तेन ह्यहमपि ताडयामि ।

---

१. 'कः—एशे एशे च' ख. पाठः. २. 'न्दं मुञ्च । जदि' ख. पाठः. ३. 'वातिअ मोएमि ए' ख. पाठः. ४. 'इ । जाव णं आळुहिअ चउप्पहपीठिआए ब' ख. पाठः. ५. 'अं ... ठा इठिआहि मं ताळन्ति । मा' ख. पाठः. ६. 'हिं' ख. पाठः. ७. 'ट्टा दा' ख. पाठः. ८. 'वि ठि आनि मं ताळेमि' ख. पाठः.

## अथ चतुर्थोऽङ्कः।

(ततः प्रविशति भटः)

**भटः**—(क) को काळो अहं भट्टिदारिआए वासवदत्ताए उदए कीळिदुकामाए भद्दवदीपरिचारअं गत्तसेवअं ण पेक्खामि। भाव पुप्फदन्तअ! गत्तसेवअं ण पेक्खसि। किं भणासि—एसो गत्तसेवओ किण्डिळसुण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति। गच्छदु भावो[1]। (परिक्रम्य) इदं किण्डिळसुण्डिगिणीए गेहं। जाव णं सद्दावेमि[2]। गत्तसेवअ! गत्तसेवअ!

(नेपथ्ये)

(ख) को[3] दाणिं एसो एत्थ राअमग्गे गत्तसेवअ! गत्तसेवअ! त्ति मं सद्दावेदि।

**भटः**—(ग) एसो गत्तसेवओ सुरं पिबिअ पिबिअ हसिअ हसिअ मदिअ मदिअ जवापुप्फं विअ रत्तलोअणो इदो एव्व आअच्छदि। एदस्स पुरदो ण चिट्ठिस्सं[4]। (निवृत्य स्थितः)

---

(क) कः कालोऽहं भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवतीपरिचारकं गात्रसेवकं न प्रेक्षे। भाव पुष्पदन्तक! गात्रसेवकं न प्रेक्षसे। किं भणासि—एष गात्रसेवकः (किण्डिल?)शुण्डिकिन्या गेहं प्रविश्य सुरां पिबतीति। गच्छतु भावः। इदं (किण्डिल?)शुण्डिकिन्या गेहम्। यावदेनं शब्दापये। गात्रसेवक! गात्रसेवक!।

(ख) क इदानीमेषोऽत्र राजमार्गे गात्रसेवक! गात्रसेवकेति मां शब्दापयति।

(ग) एष गात्रसेवकः सुरां पीत्वा पीत्वा हसित्वा हसित्वा मदित्वा मदित्वा जपापुष्पमिव रक्तलोचन इत एवागच्छति। एतस्य पुरतो न स्थास्यामि।

---

१. 'वो इ' ख. पाठः. २. 'मि। भो ग' ख. पाठः. ३. 'एदाणि एठसाएग्गरा' ख. पाठः. ४. 'विदिस्सं' ख. पाठः.

(ततः प्रविशति गात्रसेवकः)

**गात्रसेवकः**[1]—(क) को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ! गत्तसेवअ! त्ति मं सद्दावेदि । पाणागारादो णिक्कन्तो दिट्ठ ह्मि । मम सुसुरेण सुरु[2]ट्ठेण अमुद[3]अमळ्ळएग धिदमरिअळोण रू[4]शिदे मंशखण्डे मुहे पक्खित्ते ।

अणु[5]सारज्ज वि पीदा[6] अत्ताणं दण्ड[7]अज्जुआ होमि[8] ॥ १ ॥ (?)

[9]धण्गा सुराहि[10] मत्ता धण्णा सुराहि अणुळित्ता ।

[11]धण्णा सुराहि ह्लादो[12] धण्णा सुराहि[13] संञाविदा ॥ २ ॥

[14]अधणा अत्तणो पुत्तदाराणं क[15]ट्ठं पिट्ठं सुणन्ता जे मूढा णरा[16] सुसमिद्धा सुरातडा[17]अं ण जोज[18]अंति तो जाणे जमळोए वा

---

(क) क इदानीमेषोऽत्र राजमार्गे गात्रसेवक! गात्रसेवक! इति मां शब्दापयति । पानागारान्निष्क्रान्तो दृष्टोऽस्मि । मम श्वशुरेण सुरुष्टेनामृतकमल्लकेन घृतमरिचलवणरूषितो मांसखण्डो मुखे प्राक्षिप्तः ।

.... .... .... .... ....

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिताः ।

धन्याः सुराभिः स्नाता धन्याः सुराभिः संज्ञापिताः ॥

अधना आत्मनः पुत्रदाराणां कष्टं (पिष्टं ?) शृण्वन्तो ये मूढा नराः सुसमृद्धाः सुरातटाकं न योजयन्ति । .... .... .... .... ....

---

१. कः—'(पूर्वोक्तमेव पठित्वा) पा' ख. पाठः. २. 'र' ख. पाठः. ३. 'दोम' ख. पाठः. ४. 'कूरिदे' ख. पाठः. ५. 'णू' ख. पाठः. ६. 'दा जइ अ' ख पाठः. ७. 'ण्डुज्जु' ख. पाठः. ८. 'इ' ख. पाठः. ९. 'हिरण्णा' ख. पाठः. १०. 'हि अणु' ख. पाठः. ११. 'प्प' ख.पाठः. १२. 'आ' ख. पाठः. १३. 'हि मत्ता ।' ख. पाठः. १४. 'धत्ता सुराहि सञ्जदा । अधणारिअ अत्त' ख' पाठः. १५ 'ख' ख. पाठः. १६. 'का' ख. पाठः. १७. 'आ' ख. पाठः. १८. 'अति । जमळो वा' ख. पाठः.

णरअं अत्थि[1] ण त्थि अ। (?)

**भटः**—(उपसृत्य) (क) भो गत्तसेवअ! को काळो तुमं अण्णेसामि। भट्टिदारिआए वासवदत्ताए उदए कीळिदुकामाए भद्दवेदी[2] ण दिस्सदि। तुमं दाव मत्तो एत्थ[3] आहिण्डदि[4]।

**गात्रसेवकः**—(ख) जुज्जइ[5]। सा अ णं मत्ता, सो पुरुसो वि मत्तो,[6] अहं वि मत्तो, तुमं पि मत्तो, सव्वं मत्तसमं होइ।

**भटः**—(ग) सव्वं दाव चिट्ठदु[7]। राअउळे भद्दपीठिआ (अ?) ण णिक्कामिअ कुदो[8](अं पि ?आहि)ण्डदि त्ति।

**गात्रसेवकः**[10]—(घ) इदो (पि ? हि)ण्डेमि[11], एत्थ[12] पिबामि, एदेण[13] पिबामि, मा संरम्भेण। किं करीअदु[14]।

---

(क) भो गात्रसेवक! कः कालस्त्वामन्वेषे। भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते। त्वं तावन्मत्तोऽत्राहिण्डसे।

(ख) युज्यते। सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्तः, त्वमपि मत्तः, सर्वं मत्तसमं भवति।

(ग) सर्वं तावत् तिष्ठतु। राजकुले भद्रपीठिकां न निष्क्राम्य कुत आहिण्डत इति।

(घ) इतो हिण्डे, अत्र पिबामि, एतेन पिबामि, मा संरम्भेण। किं क्रियताम्।

---

१. 'गिग अणग्गिअ को जाणे' ख पाठः. २. 'ए दिण्णमिस्स' क. पाठः. ३. 'ग्ग मत्तो आ' ख. पाठः. ४. 'दिस्सि।' ख. पाठः. ५. 'इह अग्गिणितित्था सो' ख. पाठः. ६. 'मए ता तु' ख पाठः. ७ 'दु। जदा तत्र रा' ख. पाठः. ८. 'आ ण णिक्कमदि कु' ख. पाठः. ९ 'अअ पिबदि' ख. पाठः. १० 'कः—कुदो अअ पिबदि त्ति इ' ख. पाठः. ११ 'बा' ख. पाठः. १२ 'ग्ग' ख. पाठः. १३ 'मिस्स' ख. पाठः. १४. 'दुम्।' क. पाठः.

**भटः**—(क) *हिज्जउ[1] असम्बन्धप्पळावो[2]। सिग्घं भद्दवादिं पवेसेहि।

**गात्रसेवकः**—(ख) पविसदु पविसदु भद्दवदी। ‡अंघो मए भद्दवदीए अङ्कुसं आढत्तं।

**भटः**[3]—(ग) सभावविणीदाए भद्दवदीए अङ्कुसेण किं क-य्यं[4]। गच्छ, सिग्घं भद्दवादिं पवेसेहि।

**गात्रसेवकः**—(घ) पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए खुरप्पमाळा आढत्ता।

**भटः**—(ङ) पुप्फबन्धिआए[5] भद्दवदीए खुरप्पमाळाए किं कय्यं। सिग्घं भद्दवादिं पवेसेहि।

**गात्रसेवकः**—(च) पविसदु पविसदु भद्दवदी। अंघो[6] मए भद्दवदीए घण्टा आढत्ता।

---

(क) भवत्वसम्बद्धप्रलापः। शीघ्रं भद्रवतीं प्रवेशय।

(ख) प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्या अङ्कुशमाहितम्।

(ग) स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम्। गच्छ, शीघ्रं भद्रवतीं प्रवेशय।

(घ) प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्याः क्षुरप्रमालाहिता।

(ङ) पुष्पबन्धनीयाया भद्रवत्याः क्षुरप्रमालया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय।

(च) प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्या घण्टाहिता।

---

१. 'शिण्णउ' क पाठः. २. 'वो। गच्छ सि' ख. पाठः. ३. 'गात्रसेवकः—स' क. पाठः. ४. 'य्यं। सि' ख. पाठः. ५. 'वोटिदाए' ख. पाठः. ६. 'अग्घो.' ख. पाठः.

---

* भवत्वित्यर्थे 'होज्जइ' इति न्याय्यं, धातुप्रत्ययमध्ये विध्यादिषु ज्जशब्दाविधानात्।

‡ दुःखसूचको निपातोऽयं स्यात्। 'अव्वो दुःखसूचनासम्भावनेषु' इति तु प्राकृतप्रकाश-सूत्रम्।

**भटः**—(क) उदए कीळिदुकामाए भद्दवदीए घण्टाए किं करयं। सिग्धं भद्दवदिं पवेसेहि।

**गात्रसेवकः**—(ख) पविसदु पविसदु भद्दवदी। अंघो[1] मए भद्दवदीए कसिअं आदिं[2]त्तं।

**भटः**—(ग) कसिएण किं करयं। सिग्घं भद्दवदिं पवेसेहि।

**गात्रसेवकः**—(घ) पविसदु पविसदु भद्दवदी। अंघो[3]।

**भटः**—(ङ) किं अंघो।

**गात्रसेवकः**—(च) अंघो मए।

**भटः**—(छ) किं तुए।

**गात्रसेवकः**—(ज) अंघो भद्द।

**भटः**—(झ) किं भद्दत्ति।

---

(क) उदके क्रिडितुकामाया भद्रवत्या घण्टया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशाय।

(ख) प्रविशतु प्रविशतु भद्रवती। अहो मया भद्रवत्याः काशिका आहिता।

(ग) काशिकया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशाय।

(घ) प्रविशतु प्रविशतु भद्रवती। अहो।

(ङ) किम् अहो।

(च) अहो मया।

(छ) कि त्वया।

(ज) अहो भद्र।

(झ) किं भद्र इति।

---

१. 'अग्गो म' ख पाठः. २. 'ध' ख. पाठः. ३. 'अग्घो। भट—किं' ख. पाठः, अघो। मए भद्द। भट.—किं भद्द। गात्रसेवकः—भद्दवदी। भटः—किं भद्दव' क. पाठः.

**गात्रसेवकः** — (क) अंघो भद्दवदी[1] ।

**भटः** — (ख) किं भद्दवदी ।

**गात्रसेवकः** — (ग) भद्दवदी पि आढत्ता ।

**भटः** — (घ) ण तुवं एत्थ अवरज्झो । (किण्डिळ?)[2]सुण्डिगिणी खु अवरज्झा, जा राअवाह[3]णं गह्णिअ सुरं देदि ।

**गात्रसेवकः**[4] — (ङ) अंघो मए उत्तं । मा मूळविड्ढिं[5] विणा-[6]सेहि त्ति ।

**भटः** — (च) हं[7] सद्दो विअ ।

**गात्रसेवकः** — (छ) अंघो[8] जाणामि जाणामि, (किण्डिल?) सुण्डिगिणीए गेहं भिन्दिअ[9] भद्दवदी पळाअदि[10] ।

---

(क) अहो भद्रवती ।

(ख) किं भद्रवती ।

(ग) भद्रवत्यप्याहिता ।

(घ) न त्वमत्रापराद्धः । (किण्डिल?)शुण्डिकिनी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति ।

(ङ) अहो मयोक्तम् । मा मूलवृद्धिं विनाशयेति ।

(च) हा शब्द इव ।

(छ) अहो जानामि जानामि, (किण्डल?)शुण्डिकिन्या गेहं भित्त्वा भद्रवती पलायते ।

---

१. 'दी । गा' ख. पाठः. २. 'किड्डिसळड्डिकिणिं खु' ख. पाठः. ३. 'ण गुह्णिअ' ख. पाठः. ४. 'कः — उत्ता मए किड्डिळसुड्डिगिणी मा' ख पाठः. ५. 'वोड्ढि वि' ख. पाठः. ६. 'नि' ख. पाठः. ७. 'हस्स' ख. पाटः. ८ 'अग्घो जाणादि किड्डिळसुड्डिगि' ख. पाठः. ९ 'इ' ख. पाठः. १०. '।दात्ति ।' ख. पाठः.

**भटः**—(क) किं भणासि—(आकाशे) एसो भट्टा वच्छराओ वासवदत्तं गह्णिअ[1] णिग्गदो त्ति[2]।

**गात्रसेवकः**—(सहर्षम्) अविघ्नमस्तु स्वामिनः।

**भटः**—(ख) पिब[3] पिब। अज्ज वि तुमं मत्तो आहिण्डेहि[4]।

**गात्रसेवकः**[5]—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्धरायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः। यावदहमपि सुहृज्जनस्य संज्ञां करोमि। एते[6] ने सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति। भो भोः सुहृदः! शृण्वन्तु भवन्तः—

नवं शरावं सलिलैः सुपूर्णं
सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद्
यो भर्तृपिण्डस्य कृते न युध्येत्॥ ३॥

क्वनुखल्वार्ययौगन्धरायणः। अये आर्ययौगन्धरायणः। य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकरचित[7]चर्मव्यग्रवामाग्रहस्तः।

---

(क) किं भणसि—एष भर्ता वत्सराजो वासवदत्तां गृहीत्वा निर्गत इति।

(ख) पिब पिब। अद्यापि त्वं मत्त आहिण्डस्व।

---

१. 'अ ग' ख. पाठः २. 'ति। गन्छतु भावो। गा' क. पाठः. ३. 'बत्त अ' ख. पाठः. ४. 'हिबिण्डसि।' ख. पाठः. ५. 'क – को मत्त या' ख. पाठः. ६. 'त एते' ख. पाठः. ७. 'क' ख. पाठः.

विरचितबहुचीरः पाण्डराबद्धपट्टः
सतटिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः ॥ ४ ॥

अहो महत् प्रवृत्तं युद्धम् ।

हत्वा गजान् सगजिनः सहयांश्च योधान्
अक्षौहिणीमतिविगाह्य बलान्मुहूर्तम् ।
नागेन्द्रदन्तमुसलाहतभग्नबाहु-
र्भ्रष्टायुधोऽपि न निवृत्तपदोऽभियातः ॥ ५ ॥

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः । यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि । (निष्क्रान्तः)

**भटः**—(क) किंणुखु एदं । वाआरतोरणवज्जं सव्वं कोसम्बी खु इदं । होदु, इमं वुत्तन्तं अमच्चस्स णिवेदेमि ।

(निष्क्रान्तः)

प्रवेशकः ।

---

(ततः प्रविशतः साधारणौ)

**उभौ**—(ख) उस्सरह उस्सरह अय्या! उस्सरह ।

---

(क) किन्नुखल्वेतत् प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम् । भवत्विमं वृत्तान्तममात्याय निवेदयामि ।

(ख) उत्सरतोत्सरतार्या! उत्सरत ।

---

१. 'जा स' ख. पाठः.

**प्रथमः** — (क) अंघो कण्ठ[1]स्स दीअमाणस्स ण उच्चं विरमदि ।

**द्वितीयः** (ख) अंवो भट्टिद्दारिआए वासवदत्ताए अवणअणविब्भमदाएँ[2] विरुवन्तस्स मे वअणं कोच्चि ण सुणादि[3] । अंघो किं भणह — किण्णिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो[4] । किं भणह — कहं गहीद त्ति । सुणं[5]न्तु अय्या ! । अय्यजोअन्धराअणेण असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्त[6]अं धारिदो । विजयसुन्दरस्स हत्थिणो दन्तन्त[7]चोदिदो असी विवण्णो । असिदोसेण गहीदो, ण पुरुसदोसेण ।

**प्रथमः** — (ग) [9]अंवो अप्पमत्ता होह[8] तुह्मे । वाआरतोरणवज्जं सव्वं कोसम्बी खु इअं ।

---

(क) अहो कण्ठस्य दीर्यमाणस्य नोच्चं विरमति ।

(ख) अहो भर्तृदारिकाया वासवदत्ताया अपनयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति । अहो किं भणथ — किन्निमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं भणथ – कथं गृहीत इति । शृण्वन्त्वार्याः ! । आर्ययौगन्धरायणेनासिद्वितीयेनाक्षौहिण्या अग्रवेगो मुहूर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्तान्तचोदितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण ।

(ग) अहो अप्रमत्ता भवत यूयम् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम् ।

---

१. 'ह' ख. पाठः. २. 'ए उज्जयिणीए जणो वि' ख. पाठः, 'एको' क. पाठः. ३. 'दि । प्रथमः — किं' ख पाठः. ४. 'णो । क' ख. पाठः. ५. 'णादु अय्यो । अ' ख. पाठः. ६. त्तं धारिअ वि' ख. पाठः. ७. 'न्तर पाडिदो' ख. पाठः. ८. 'अग्घो' ख. पाठः. ९. 'थ । वा' क. पाठः.

**उभौ** — (क) ओदरदु ओदरदु अय्यो ओदरदु ।

(ततः प्रविशति यौगन्धरायणः बद्धबाहुः फलकेना[1]नीयमानः)

**यौगन्धरायणः** — अयम(य?ह)मवतरामि ।

रिपुगतमपनीय वत्सराजं
ग्रहणमुपेत्य रणे स्वशास्त्रदोषात् ।
अयमहमपनीतभर्तृदुःखो
जितमिति राजकुले सुखं विशामि ॥ ६ ॥

भोः! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः[2], अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय
कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ७ ॥

**उभौ** — (ख) उस्सरह उस्सरह अय्या! उस्सरह ।

**यौगन्धरायणः** — मद्दर्शनाभिलाषी जनो न कश्चिदु[3]त्सारयितव्यः ।

---

(क) अवतरत्ववतरत्वार्योऽवतरतु ।

(ख) उत्सरतोत्सरतार्याः! उत्सरत ।

---

१. 'कशयनेना' ख. पाठः. २. 'तः । प' क. पाठः. ३. 'दस्युत्सा' ख. पाठः.

पश्यन्तु मां नरपतेः पुरुषाः समन्त्वा
राजानुरागनियमेन विपद्यमानम् ।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥ ८ ॥

**उभौ** —(क) उस्सरह उस्सरह[2] । किं तुझेहि ण दिट्ठपुरुवो अय्यजोअन्धराअणो ।

**यौगन्धरायणः** — दृष्टः पूर्वं, न त्वेवम् ।

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ९ ॥

(प्रविश्य)

**भटः** —(ख) अय्य! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ ।

**यौगन्धरायणः** — नैतदस्ति[3] ।

चिरमग्निगरे निरोधमुक्तः
स किल वनान्युपलभ्य भद्रवत्या ।
ग्रहणमुपगमिष्यति प्रयातो
निमिषितमात्रगतेषु योजनेषु ॥ १० ॥

भद्र! कथं गृहीत इति श्रुतम्[4] ।

---

(क) उत्सरतोत्सरत । किं युष्माभिर्न दृष्टपूर्व आर्ययौगन्धरायणः ।

(ख) आर्य! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः ।

---

१. 'नि' ख. पाठः. २. 'ह । णिवेदेमि किल वच्छ' ख. पाठः. ३. 'दप्यस्ति' क. पाठः ४. 'श्रूयते । भ' ख. पाठः.

**भटः** — (क) अणुसारिअ णळागिरिणा गहीदो किळ ।

**यौगन्धरायणः** — अस्ति वाहनसामर्थ्यम् । असमायुक्तस्तु सः ।

गजस्याधोरणायुक्तो जवो भवति शिक्षया ।
विमुक्तं[1] वत्सराजेन क एनं[2] वाहयिष्यति ॥ ११ ॥

**भटः** — (ख) अय्य ! अमच्चो आह[3] — आयुधागारे चिट्ठदु किळ अय्यो । पुरुसगुत्तो अअं देसो त्ति ।

**यौगन्धरायणः** — अहो हास्यमभिधानम् ।

अग्निं बद्ध्वा वत्सराजाभिधानं
यस्मिन् काले सर्वतो रक्षितव्यम् ।
तस्मिन् काले सुप्तमासीदमात्यै-
र्नीते रत्ने भाजने[4] को निरोधः ॥ १२ ॥

(परिक्रम्य)

**भटः** — (ग) इदं आउहागारम् । पविसदु अय्यो[5] ।

(क) अनुसार्य नलागिरिणा गृहीतः किल ।

(ख) आर्य ! अमात्य आह — आयुधागारे तिष्ठतु किलार्यः । पुरुषगुप्तोऽयं देश इति ।

(ग) इदमायुधागारम् । प्रविशत्वार्यः ।

१. 'क्तो' ख. पाठः. २. 'द' ख. पाठः. ३. 'सो । ' ख. पाठः. ४. 'भो' ख. पाठः. ५. 'य्यो । अय्य ! अ' ख. पाठः.

* विमुक्तं विसृष्टम् । गजं भद्रवत्याख्यमनुसृत्येतिशेषः ।

(प्रविश्य)

**भटः**—(क) अमच्चो आह—अवणीअदु बन्धणं त्ति।

**यौगन्धरायणः**[1]—अक्षीणं मां कुरु। व्यक्तं भरतरोहको मां द्रष्टुमिच्छति, अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि।

मद्वाक्यैः[2] परिभिद्यमानहृदयं रोषात् प्रमत्ताक्षरैः
प्रारब्धेषु नयच्छलेषु चलितं[3] तुल्याधिकारोज्झितम्।
सूक्तैः शास्त्रविनिश्चितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मल्लमपक्रियाविनिहतं[4] व्रीळादिवाधोमुखम्॥ १३॥

(ततः प्रविशति भरतरोहकः)

**भरतरोहकः**—क्वासौ क्वासौ यौगन्धरायणः।

अवसितनिजकार्यं वञ्चनैर्दुर्निरीक्षं
कथमिव परिभाषे भर्तुरर्थे विपन्नम्।
चिरमवनतकार्यं चापि निर्युक्तमन्त्रं
भुजगमिव सरोषं धर्षितं चोच्छ्रितं च॥ १४॥

**भटः**—(ख) अय्यजोअन्धराअणो[5] अय्यं पडिवाळअन्तो आउहागारे चिट्ठइ।

**भरतरोहकः**—भवतु भवतु।

---

(क) अमात्य आह—अपनीयतां बन्धनमिति।

(ख) आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति।

---

१. 'णः–क्षी' क. पाठः. २. 'माल्यैः प' ख पाठः. ३. 'तु' ख. पाठः. ४. 'हि' ख. पाठः. ५. णोप' ख. पाठः.

मन्त्रित्वे वञ्चितो ह्येष सव्याजं नीलहस्तिना ।
प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते ॥ १५ ॥

**भटः**—(क) अय्य! एसो अमच्चो ।

**भरतरोहकः**—(उपगम्य) भो! यौगन्धरायण! ।

**यौगन्धरायणः**—भोः! ।

**भटः**—(ख) अहो सरस्स गम्भीरदा । अय्यस्स एकक्खरेण पूरिदो अयं देसो ।

**भरतरोहकः**[1]—(उपविश्य) भोः! यौगन्धरायण इत्यशरीराण्यक्षराणि श्रूयन्ते । दिष्ट्या[2] भवान् दृश्यते ।

**यौगन्धरायणः**—दिष्ट्या भवान् दृश्यत[3] इति । पश्यतु माम्,

एवं रुधिरदिग्धाङ्गं वैरं नियममास्थितम् ।
गुरोर्[4]वर्जितं हत्वा[5] शान्तं द्रौणिमिव स्थितम् ॥ १६ ॥

**भरतारोहकः**—अहो छलेनागतगजारम्भस्यात्मसम्भावना ।

**यौगन्धरायणः**—किं छलेनेति । तत् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो[6] नरपतिर्बाहूपधानां क्षितिम् ।

(क) आर्य! एषोऽमात्यः ।

(ख) अहो स्वरस्य गम्भीरता । आर्यस्यैकाक्षरेण पूरितोऽयं देशः ।

१. 'कः—भोः' ख. पाठः. २. '(दृष्ट्वा) भवान् दृष्टः । यौ' क. पाठः. ३. 'दृष्टः प' क. पाठः. ४. 'प' ख. पाठः. ५. 'हि' ख. पाठः. ६. 'गो' ख. पाठः.

राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवतो[1] नैवापराधो[2] मम ॥ १७ ॥

**भरतरोहकः**—भोः! यदग्निसाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं भोस्तस्करप्र[3]वृत्तिः।

**यौगन्धरायणः**—मा मा भवानेवम्। विवाहः खल्वेष स्वामिनः[4]।

भारतानां कुले जातो वत्सानामूर्जितः पतिः।
अकृत्वा[5] दारनिर्देशमुपदेशं करिष्यति ॥ १८ ॥

**भरतरोहकः**—अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः।[6] तदिदानीं किं नावेक्षते।

**यौगन्धरायणः**—मा मा भवानेवम्।

यदस्य[7] चाज्ञां कुरुते नलागिरिः
स शिक्षितानां वचनेषु तिष्ठति।
ततो विमुक्तः स्वशरीररक्षणे
यशः प्रदातुं सुहृदां च जीवितम् ॥ १९ ॥

**भरतरोहकः**—यद्येवं नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्बद्धस्ते[8][9] स्वामी।

**यौगन्धरायणः**—नेति पश्यत्युपक्रोशभयात्[10]।

---

१. ‘तो’ क. पाठः. २. ‘वात्र दोषो स’ क. पाठः ३. ‘र वृ’ ख. पाठ. ४ ‘ना’ ख. पाठः. ५. ‘त्वदानानि’ ख. पाठः. ६. ‘नी नापेक्ष’ ख. पाठः. ७. ‘पदस्य राज्ञां’ ख. पाठः. ८. ‘ल’ क. पाठः. ९ ‘न्ध’ ख. पाठ. १०. ‘त्य’ ख. पाठः.

**भरतरोहकः** — अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति । समरावजितेषु शत्रुषु किमाह शास्त्रम् ।

**यौगन्धरायणः** — वधः ।

**भरतरोहकः** — वधार्हो वत्सराजश्चेत् किमस्माभिः स[1] सत्कृतः ।

**यौगन्धरायणः** — एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम् ।

**भरतरोहकः** — एतदपि सम्भाव्यं मन्यते स्वामी ।

**यौगन्धरायणः** — कः संशयः ।

हस्तप्राप्तो हि वो राजा रक्षितस्तेन साधुना ।
नह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते ॥ २० ॥

**भरतरोहकः** — भवतु भवतु । महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः ।

**यौगन्धरायणः** — अहो! हास्यमभिधानम् ।

भवतां चाग्रतो यातः शेषकार्येषु का कथा ।
समूलं वृक्षमुत्पाट्य शाखा[2]श्छेत्तुं कुतः श्रमः ॥ २१ ॥

(प्रविश्य)

**काञ्चुकीयः** — (कर्णे) एवमिव ।

**भरतरोहकः** — प्रकाशमुच्यताम् ।

---

१ 'सत्कारः प्रयुक्तः ।' ख. पाठः. २. 'इशक्तुं' ख. पाठः.

**काञ्चुकीयः** —

कारणैर्बहुभिर्युक्तैः[1] कामं नापकृतं त्वया ।
गुणेषु न तु मे द्वेषो भृङ्गारः प्रतिगृह्यताम् ॥ २२ ॥

इति ।

**यौगन्धरायणः** — हा धिक्,

गृहा न निर्वान्ति मया प्रदीपिता-
स्तथैव तावद्धृदयानि मन्त्रिणाम् ।
इयं तु पूजा मम दण्डधारिणः
कृतापराधस्य हि सत्कृतिर्वधः ॥ २३ ॥

(नेपथ्ये हाहाकारः क्रियते)

**भरतरोहकः** — अये,

को नु खल्वेष सहसा प्रासादाग्राद् विनिस्सृतः ।
श्येनपक्षाभिमृष्टानां कुररीणामिव[2] ध्वनिः ॥ २४ ॥

भोः! ज्ञायतां शब्दः ।

**काञ्चुकीयः** — यदाज्ञापयत्यार्यः । (निष्क्रम्य प्रविश्य) एषा तत्रभवत्यङ्गारवती[3] शोकाभिभूतहृदया प्रासादाच्छरीरं[4] मोक्तुकामा महासेनेनाभिहिता यथा— क्षत्रधर्मेणोद्दिष्टस्ते दुहितुर्विवाहः । किमिदानीं हर्षकाले सन्तप्यसे । तच्चित्रफलकस्थयोर्वत्सराज-वासवदत्तयोर्विवाहोऽनुष्ठीयताम् इति[5] । तत्र हि,

स्त्रीजनेनास्य[6]* सहसा प्रहर्षव्याकुलक्रमा ।
क्रियते मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया ॥ २५ ॥

---

१. 'दुःखैः का' क. पाठः. २. 'कुरीणामिव विध्व' ख. पाठः. ३. 'ती प्रा' क. पाठः. ४. 'रं विमो' ख. पाठः. ५. 'ति । कुतः अत्र' ख. पाठः. ६. 'ध' ख. पाठः.

---

* अस्य विवाहस्य ।

**यौगन्धरायणः**—एवं सम्बन्धं मन्यते महासेनः । तेन ह्यानीयतां भृङ्गारः ।

**काञ्चुकीयः**—गृह्यताम् । (उपनयति)

**भरतरोहकः**—भो यौगन्धरायण ! किं ते भूयः प्रियमुपहरा[1]मीति महासेनः ।

**यौगन्धरायणः**—यदि मे महासेनः प्रसन्नः, किमतः परमिच्छामि ।

(भरतवाक्यम्)

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २६ ॥

(निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः ।

---

[2]प्रतिज्ञानाटिकावसिता ।

शुभं भूयात् ।

---

१. 'रति म' ख. पाठः. २. 'प्रतिज्ञायौगन्धरायणं समाप्तं, वत्सराजचरितं समाप्तम्' ख. पाठः.

APPENDIX I.

---

# मन्त्राङ्कव्याख्यानम्

## अर्थात्

## प्रतिज्ञायौगन्धरायणतृतीयाङ्कव्याख्यानम् ।

---

(ततः प्रविशति डिण्डिकः)

**डिण्डिकः— भो! देवउळपीठिआए मम मोदअमल्लअं णिक्खिविअ दक्खिणमासआणि गणिअ बन्धिअ पडिणिवुत्तो दाणिं मोदअमल्लअं ण पेक्खामि।**

**व्याख्या**—देवकुलपीठिकायाम् उज्जयिन्यां महाकालमिति प्रसिद्धस्य चामुण्डीमन्दिरस्य परिसरवर्तिनः शून्यशिवालयस्य पीठिकायाम् अलिन्दे। मम मोदकमल्लकम् अपूपविशेषं निक्षिप्य दक्षिणामाषकाणि मापसदृशविरचितकनकभेदा(नि?न्) तान्यपि ग(णि?णयि)त्वा बद्ध्वा प्रतिनिवृत्त इदानीं मोदकमल्लकं न पश्यामीति बाह्यार्थः। पश्चादाभ्यन्तरार्थः। भो इति वितर्के। देवो महासेनः, तस्य कुलं नगरं वंशोऽपि। तयोः पीठिकायामलङ्कारभूतायामिति विशेषणस्योक्तत्वाद् विशेष्यस्यापि सिद्धेर्वासवदत्तायामिति सिद्धम्। तस्यां मम मोदकमल्लकं निक्षिप्य तस्यां मन्मथाविष्टचित्तं महीपतिं विज्ञाय दक्षिणामाषकाणि नृपतेर्वाक्यानि राज्ञा यौगन्धरायणं प्रत्युपदिष्टानि ग(णि?णयि)त्वा मद्धृदये बद्ध्वा। अथवा दक्षिणानि माषकाणीति विदग्धाः सुहृदः विशाखाद्यात्मसहायाः। ते पूर्वमेव श्वोऽस्माकं कौशाम्बीगमनमिति निश्चितवन्तः। तानभिगम्य यत्र यत्र ते वर्तन्ते, तत्र तत्र गत्वा परेद्युर्गम(नोऽस्त्य?नमस्त्य)स्माक(मित्ये)षां विज्ञाप्य प्रतिनिवृत्त इदानीं मोदकमल्लकं न पश्यामि। मोदकमिति बहूनां संज्ञा। कथमिति चेद्, राजसचिवसुहृत्प्रयोजनविरोधोपद्रवनीतयः (?)। तेषां विवक्षितं वक्तुमीप्सितं यद्यत्, तत्तन्मोदकसंज्ञितं भवति। तस्मादत्र मोदकमल्लकमिति सन्तोषपात्रभूतत्वाद् यौगन्धरायणः। यौगन्धरायणं न पश्यामि।

## आ एक्कमोदअपरिदोसिदो ण दाव ओळग्गो मं अणुसरादि ।

अस्मन्मोदकापहारी क इति विचिन्त्यते । आ ज्ञातम् । एकमोदकपरितोषितो न तावदवलग्नः । कथमिति चेद् गुळनालिकेरतण्डुलविमिश्रितानां मधुरकराणां मोदकानाम् एकदानेन परितोषितः । अवलग्नः सक्तः । भक्षणलालसो भैक्षवादी मां नानुसरति । इति प्रहसनार्थं प्रयुज्य पुनराभ्यन्तरमाह । ततः अनागतो यौगन्धरायणः, कस्मादनागतवान्, यावन्मनसा विचिन्त्य निर्णेष्यामि । 'आङाषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे । आ प्रगृह्यः स्मृतौ वाक्ये' इति सिंहः । आ इति स्मरणे । स्मृतं मया । कथमिति चेद् एकमोदकेन प्रधानमोदकेन उदयनग्रहणेन परितोषितो न तावन्महासेनः । केवलं ग्रहणमात्रेण प्रद्योतस्य कृतकृत्यता नास्ति । तस्मात् कृतप्रयत्नतया मामनुसरति । अवलग्नः अवनं रक्षणं तस्मिन् लग्नः रक्षणतत्परः राजा महासेन इत्यर्थः । बुद्धिमान् प्रच्छन्नप्रयोजननिपुणः । तस्मादस्माकं प्रयोजनान्तरेणापि तेन विज्ञातेन भवितव्यमिति चिन्तयन्नाह । न महासेनेन विज्ञातम् । कथमिति चेद् एकमोदकेन परितोषितो मां नावलग्नस्तावदनुसरति गृहीतं वत्सपतिं रक्षितुमेव शक्तः । 'यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे' इति सिंहः । वत्सराजरक्षणार्थमेव प्रवृत्तिं करोति । अन्यस्मिन् प्रयोजनेऽप्रवृत्तिमानिति व्यक्तोऽभिप्रायः ।

## उच्चदाए पाआरस्स अगई कुक्कुराणं ।

अथवा कुत्सितैः कौलेयकैः कथं परिगृहीतानि मोदकानि । कुक्कुराणामपि स्वीकर्तुं न शक्यम् । कथमिति चेत् प्राकारस्योच्चतया सालस्योन्नतत्वेन कुक्कुराणामगतिः गतिर्नास्ति । 'गतिर्नाडीव्रणे पथि । उपाये' इति केशवः । तेषां प्राप्तुं न मार्ग इति बाह्यार्थः । महासेनो नः प्रयोजनविरोधकारी न । ननु च तत्सचिवा भरतरोहकादयो बुद्धिबलोपेताः । तैरस्माकं प्रयोजनं नष्टम् । तेषामपि शक्यं (तदपि?) न । कथमिति चेत् प्राकारभूतो यौगन्धरायणस्य बुद्धिमार्गः । तमतिक्रमितुं न शक्ताः प्रद्योतसचिवाः, यथा (त्वन्न? श्वान)-स्तथा कुत्सितवृत्तयः । तस्मात् तेभ्योऽस्माकं विरोधो नास्तीति सिद्धान्तः ।

**अक्खदभत्तदाए अलोहणीअं पहिआणम् ।**

उताहो पथिकैरप्यपहृतानि किम् । इतस्ततः सर्वकालं सञ्चरन्तः क्षुत्पिपासाभिभूताः सहसा स्वादूनि मोदकानि दृष्ट्वा बुभुक्षितास्ते अ(दितुं ? त्तुं) युक्ता इति व्यवहृत्य देशशोधनं कुर्वन्नाह । तैरपि नापहृतानि, कथम् । अक्षतभक्ततया पथिकानामलोभनीयम् । पाथेयप्रचुरा अध्वन्याः बहुविधैः खाद्यैरप्युपेताः । तस्मात् तेषामपि न प्रापणीयानीति बाह्यार्थः । ततः स्वार्थमवलम्ब्याह । पथिका इति चाराः सततसञ्चारशीलतया परस्परसदृशाः । प्रणिधिभि(रवि ? र्वि)रोधं कर्तुं युक्तमिति चिन्तयन्नाह । तैरप्यस्मदर्थस्य विरोधो नास्ति । चारैरस्मन्नीतिमार्गस्य विरोधो न कृतः । कथं, तेषामप्यक्षतं भक्तं प्रभूतमोदनम् । भृतिमन्तस्ते वत्सराजग्रहणपरितुष्टेन प्रद्योतेन प्रदत्तैर्भूषणदुकूलानुलेपनाभ्यवहारादिभिरुपभोक्तुमेव प्रवृत्ताः । अक्षतभक्ततया पथिकानां चाराणामप्यलोभनीयं नाभिलषितमित्यर्थः । 'खघथधभां हः' इति प्राकृतवशाद् अलोहणीयमिति (सभाशब्देन विना सर्वत्र ?) हत्वं भवति भकारस्य प्राकृते ।

**आदु अपि णं खाआमि । भोदु उग्गारइस्सं दाव अहं । ही ही वुड्ढो विअ सूअरवत्थी सुद्धवादं एव्व उग्गिरामि ।**

अथवा अप्यहं खादामि ननु । भवतु उद्गारयिष्ये तावदहम् । ही ही इति हीशब्दोऽत्र सम्माने । वृद्धो ध्मातः सूकरवस्तिरिव शुद्धवातमेवोद्गिरामि । मोदकापह(ारिणा ? रण)वितर्केण व्यव(हरन् ?हारे) प्रहसनार्थं बाह्यार्थं प्रथमं प्रयुज्य स्वार्थो विचिन्त्यते । परपक्षसम्बन्धिभिर्जनैरस्माकं विरोधो नास्तीति (वक्तव्यम् ? उक्तम्) । किमस्मत्पक्षसम्बन्धिभिर्नष्टमिति निरूप्यते । कथं, (परैर्न नाशोऽस्माकं विशेषोऽस्ति ?) मम यौगन्धरायणस्यापि प्रतिपत्तिचिन्तनमेवालं मन्ये । अन्ये न सम्बद्धाः । तत्र मयापि नष्टेन भवितव्यम् । परेषां गेहेषु सततगतिरहं बहुभाषी । तस्मादस्मद्व्यवहारदोषेण नशितुं युक्तम् । भवतु तत्त्वदर्शनं नु । उद्गारयिष्ये चिन्तयामि । ही हीति पूर्ववत् । स्वाप्रमत्ततया दोषविहीनकार्यतया च सन्तोषातिरेकतया हीहीति द्वितयप्रयोगः । वृद्धः ध्मातः सूकरवस्तिरिव । वराहमूत्राशयचर्माणि ध्मायमाने तस्मिन् वात एव बहिर्निर्याति । तथोद्गारयमाणोऽहमपि केवलं वातमेवोद्गिरामि । अस्मिन् नगरे प्राप्तो यदा, तदाप्रभृति समीर-

णघोषकोलाहलवत् सर्वत्र व्यवहर्ता । तस्मादस्मत्कार्यविरोधो नास्तीति ।

**अहवा लोहिदकच्चाअणीए केरअं मम केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे ।**

अथवा लोहितकात्यायन्याः भद्रकाल्याः केरकं वस्तु मम वस्त्विति परिकल्प्य शिवेन प्रतिहस्तीकृतं भवेत् । शिवो महादेवः । चामुण्डीपूजाया(सिद्धि? मपि)तमस्मत्कुक्ष्या मोदकं ममेति विचिन्त्य स्वयं गृहीतवानयं शूलीति बाह्यार्थमतीत्य स्वकार्यप्रधानुवदति वसन्तकः । अथवा लोहितकात्यायनी वासवदत्ता । तस्या द्रव्यभूतो भवति स्वामी । तस्य तादृशीमवस्थां न जानात्येष युगन्धरसूनुः। अनवरतमस्माकमनुग्रहशीलतया शिव इत्युक्तो यौगन्धरायणः । तेन स्वेन निजोद्भूतप्रमत्तत्वात् प्रयोजनमपि नष्टीकृतं भवेदित्यर्थः ।

**जदि वि एसो बह्मआरी बहुकेहि रूवेहि अविणअं करेदि ।**

आहोस्विदेष ब्रह्मचारी रुद्रवदाचरतीत्यर्थः । ब्रह्मशब्दो रुद्रेऽपि वर्तते । बहुकैः रूपैराकारैरप्रश्रयं करोति । असौ गणपतिर्मोदकं हर्तुं योग्य इति बाह्यार्थः । (यद्यपि स्वेन स्वस्थो निधनं गतो यदि ?) असौ यौगन्धरायणः ब्रह्मचारी । ब्रह्मशब्दो बलेऽपि वर्तते । बलेनानुतिष्ठतीत्यर्थः । अनेकै रूपैः सामादिभिरुपायैरविनयं करोति । नियमितं स्वामिनमादाय गन्तुं समर्थः ।

**भोदु पेक्खिस्सं दाव अहं ।**

भवतु गर्भगृहं प्रविश्य द्रक्ष्यामि तावदहमित्युक्त्वा प्रविश्याह—

**अविह, एदं खु मम मोदअमल्लअं सिवस्स पादमूले चिट्ठइ ।**

एतन्मम मोदकमल्लकं शिवस्य पादमूल इति बाह्यदेशागतजनविश्वासार्थं बाह्यार्थ एव ।

**जाव णं गह्णामि ।**

यावदेनं ग्रहीष्यामि ।

**देहि भट्टा! मम मोदअमल्लअं ।**

देव! स्वामिन्! देहि मम मोदकमल्लकम् ।

**तुमं वि मम चोरो सि ।**

त्वमपि मम चोरोऽसि इति वदन् गृहशोधनं कुरुते ।

**अविह आलिहिदं खु इदं मम मोदअमल्लअं सन्दावतिमिरेण लुट्ठु ण पेक्खामि ।**

एतन्मम मोदकमल्लकं भित्तावालिखितं खलु सन्तापतिमिरेण व्यक्तं न पश्यामि ।

**भोदु, पमज्जिस्सं दाव अहं ।**

भवतु, प्रमार्जनं करिष्ये । तपोमन्त्रौषधसिद्धा आलेख्यच्छलेन भित्तावविज्ञाता निश्चला वर्तन्ते चेत् स्पर्शेन प्रकाशीकरिष्ये । स्पृष्ट्वा ही ही 'अहो ही इति विस्मये' इति सिंहः । तस्माद् विस्मितो वदति—

**साहु ले चित्तअर! भाव! साहु । जुत्तलेहदाए वण्णाणं जह जह पमज्जामि, तह तह उज्जळदरं होइ ।**

वर्णानां श्वेतारुणपीतमेचकादीनां युक्तलेखतया उचितचित्रकरणवैचित्र्यकुशलतया जह जह पमज्जामि यथा यथा प्रमार्जनं करोमि, तह तह उज्जळदरं होइ तथा तथोज्ज्वलतरम् अत्यर्थमुज्ज्वलं भवति । हीप्रभृतेरस्य बाह्यार्थ एवं भवति । स्वाभिप्राय(स्यापीति?स्तु)—(शब्दा?अ)र्थः पूर्ववत् साधुशब्दस्य(ापि?), हे यौगन्धरायण! चित्रकर! विचित्रकर्मकुशलेत्यर्थः । त्वया स्वामिमोक्षणोपा(यक्रमित?योपक्रान्त)स्य कार्यस्य यत्र यत्र विरोधः प्रकीर्तितः, तत्र तत्र शोभनवर्णाः प्रकाराः विधानविशेषाः विशाखादीनां वेषाच्छादनादयः । तेषां यथायो(ग्य?गं) कर(णतया?णेन) त्वत्समानः कश्चिन्मन्त्री लोके नास्तीत्यर्थः । भित्तिशोधनं कुर्वन्नाह—

**भोदु उदएण पमज्जिस्सं ।**

उदकमानीय प्रमार्जिष्ये इति बाह्यार्थः। भवतु, उदकेन प्रमार्जिष्ये। यद् द्रवं तत् स्त्रियमाहुः। यत् कठिनं तन्नरमाहुः। उदकेन वासवदत्तया प्रमार्जितव्यं भित्तिं मदनं प्रमार्जिष्ये। अतिविचित्राङ्ग्या मालवेन्द्रसुतया स्वामिबुद्धेः शुद्धिं करिष्ये। कामातिरिक्तस्य मनसः शोधनं (तद्दुःखं तत्?) करिष्ये।

**कहिंणुहु उदअं।**

कुत्रनुखल्दकम्।

**इदं सोहणं सुद्धतडाअं।**

अस्य शोधनात् शोभनं शुद्धतटाकम्।

**अहं विअ सिवो वि दाव एदस्सिं मोदअमळ्ळए णिरासो होदु।**

शिवोऽपि यौगन्धरायणोऽपि एतस्मिन् मोदकमल्लके श्वः कौशाम्बीगमने निराशो विगताशो भवतु। आपिच एतस्मिन् मोदकमल्लके वासवदत्तायां निराशो भवतु मन्त्रिमुख्यः।

(नेपथ्ये)

**मोदआ! मोदआ! हहह।**

हहहेति हे मोदआ मोदआ इत्युन्मत्तकस्य नेपथ्यश्रवणादाह डिण्डिकः—

**अविह, एसो उम्मत्तओ मम मोदअमळ्ळअं गह्णिअ हसमाणो फेणाअमाणमळिणवरिसारच्छोदअं विअ इदो एव्व आहावइ।**

असौ भ्रान्तः। अवलग्नसारमेयपान्थाशिवगणाधिपानामनुलाप(नं मु)धाकृतं मया। भ्रान्तहस्तमोदकं मम मोदकमल्लकम्। मोदकापहारी उन्मत्तकः। एष मम मोदकमल्लकं गृहीत्वा हसमानः दृसं हसनं करोति। फेनायमानमलिनवर्षारथ्योदकमिव, फेनायमानमालिनं डिण्डीरपरिमिलितकरीषं, वर्षासु रथ्यायां तरलितहलहलकोलाहलाविलजलसञ्चय इव इत एवागच्छति।

**चिट्ठ चिट्ठ उम्मत्तअ! चिट्ठ।**

तिष्ठ तिष्ठ उन्मत्तक! तिष्ठ।

**इमिणा दण्डअट्ठेण सीसं दे भिन्दामि।**

अमुना दण्डकाष्ठेन ते मूर्धानं भिनद्मि। मूर्ध्नो भेदनं करिष्यामीति बाह्यार्थः। ततो वसन्तकः कार्याभिनिविष्टः पूर्वमेवागम्य तदागमनमेव चिन्तयन्

तस्य नेपथ्यश्रवणात् सन्तोषित आह — एष यौगन्धरायण उन्मत्तकोऽन्यैरपरिच्छेद्यवेषभाषाचारवान् । मम मोदकमेतत् । श्वः कौशाम्बीगमनाभिनिविष्टोऽहम् । तद्विरोधविज्ञानेन निराशोऽहम । तद् गृहीत्वा हसमानोऽसौ । स्वनगरयानमेवानेन निर्धारितम् । तस्मिन्नेव निश्चयबुद्ध्या हसितं करोति । राजपुत्र्या सह राजेन्द्रं कौशाम्बीं नेतुमीप्सितोऽहम् । तदपि साधयितुमसौ समर्थः । करीषमिलितरथ्योदकवदित एवाभिवर्तते । यावत् स्वाभिप्रायविरोधसूचनं करिष्ये । हे मन्त्रिप्रवर! तिष्ठ तिष्ठ भ्रान्त! तिष्ठ । गमनविरोधो नास्तीति यत् त्वया निश्चितम् एतद्, (हा? भ्रा`न्तिज्ञानं त्वद्विभ्रमोऽयम् । अमुना दण्डकाष्ठेन अनया जिह्वया ते शिरश्चाभिप्रायस्तस्य भेदनं करोमीत्ययमर्थः ।

**उन्मत्तकः—** **मोदआ! मोदआ!** हहह ।

अथोन्मत्तक आह — हे मोदकाः! । मोदकशब्दो नरषण्डयोर्वर्तते । तस्मान्मोदको मोदकमिति रूपद्वयम् । हे मोदकाः! इत्यपूपाह्वानं बाह्यार्थः । तथा हे सुहृदः! इति स्वेनोपक्रामितकार्यान्तप्राप्त्या मुत्प्राचुर्येण मोदका इति सुहृदामाह्वानं करोति । हहहेति हास एव व्यर्थेऽपि ।

**विदूषकः — भो उम्मत्तअ! आणेहि मम मोदअमळअं।**

भो उन्मत्तक! मम मोदकमल्लकं देहि । भो यौगन्धरायण! मम मन्त्रावसरं देहि ।

**उन्मत्तकः—किं मोदआ, कहिं मोदआ, कश्श मोदआ, किं इमे मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति ।**

किं मोदकाः, कुत्र मोदकाः, कस्य मोदकाः, किमेतान् मोदकानुत्सृजामि, उताहो एतान् प्रणयामि, किमुत खादामि इत्युन्मत्तसदृशैर्भाषणैर्विकत्थमानो यथार्थमाह । भो वसन्तक! दृष्टसमये ते मन्त्रावसरप्रार्थनायाः को हेतुः । किमस्माकमर्थस्य विरोधोऽस्तीति विचार्यमाणे तस्य मौनितया विरोधनिर्णयं कृत्वा कस्मिन् परेषां पक्षेऽथवास्माकं पक्षे (कथं? कुत्र) मद्विरोध(स्य?) इति तद्विचारेऽपि न

प्रत्युत्तरवान् स यावत्, स्वरूपस्य विज्ञानं करोमीति मतिं कृत्वा कस्य विधेयं स्वामिनो हृदयमिति मन्त्रिमुख्यस्य तृतीये प्रश्नेऽप्यभाषणं करोति (मे?) यदा, तदैतत् प्रारब्धं स्वामिमोक्षणोपायहेतुकं समस्तमपोह्य बाह्यानां प्रवृत्तिं करिष्ये इति विचार्यमाणे तत्रापि निरुत्तरतया पुनरप्याह — आदु अथवास्योपक्रमितकार्यस्य कालातिक्रमोऽनेन। प्रच्छन्नबार्हस्पत्य! किं साध्यम्? अस्मिन्नपि वसन्तक! प्रत्युत्तरं न करोषीति। भवतु, एवं तावत् करिष्ये। अहं सुहृद्भिः परिवृतः कृपाणहस्तः कृतपरिकरः निःशेषबलबान्धवैः सह तं महासेनं हनिष्ये इत्यभिप्रायः।

**विदूषकः—ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ।**

भवतो न खाद्यानि नोत्सृज्यानि च। एतेषां मदनम् (?) अवश्य- (मा? म्।) उपेक्षणमप्ययुक्तम्। भो यौगन्धरायण! महासेनं प्रति (तो) निग्रहप्रवृत्तिः। तत्रैव मे निर्बन्धः। (त्वयोत्सृज्यानि अलमुपेक्षितुमपि प्रवृत्तवान्? ।)

**के के मं वज्झन्ति। मोदआ खु मं रक्खन्ति।**

**णेवच्छविसेसमण्डिआ परीदिं उप्पादेदुं उवट्टिआ।**
**राअगिहदिण्णमुळ्ळिआ काळवसेण मुहुत्तदुब्बळा॥**

के के मां बा(ध्य? ध)न्ते। मोदकाः खलु मां रक्षन्ति। कीदृक्श्रुता मोदकाः, नैपथ्यविशेषमण्डिता विविधभेदविरचितगुळनालिकेरादिमधुरद्रव्यविमिश्रिताः। तस्मादभ्यवहारे (भक्षणे?) प्रीतिमुत्पाद(ने? यितुं) समर्थाः। राजगृहे दत्तमूल्याः राजगृहे रथ्याया बहुद्रव्यदानेन स्वीकृताः। कालवशान्मुहूर्तदुर्बलाः चिरकालोषितत्वात् किञ्चित्कालदुर्बलाः। बाह्यार्थः। भो वसन्तक! के मम मतिबलमतिक्रमितुं शक्ताः बुद्धिगुरुशुक्रादयो वा कथं मद्बुद्ध्यतिशये समर्थाः। (इत्युक्तस्यैवम्भूता मतिरासीत्?।) अहङ्कार(निन्दा?)सूचकोऽस्मच्छब्दः। तस्मादाच्छादनं कर्तव्य मयेति पुनराह। सहायबलेनाहमेवं ब्रवीमि। मोदकाः सुहृदो मां रक्षन्ति खलु। ते कीदृग्भूताः, णेवच्छविसेसमण्डिआ। 'त्यथ्यद्यां चछजा' इति छत्वं युक्तस्य। नैपथ्यविशेषा भूषणविशेषाः तैर्मण्डिताः। स्वैरवलम्बिता(नामाच्छादिता?)नां वेषान्तराणां भेदैः सहजैरिवालङ्कृताः परैरपरिच्छेद्या इत्यर्थः। प्रीतिमु-

त्पादयितुमुपस्थिताः स्वामिनः सन्तोषं वर्धयितुं समर्थाः राजगृहदत्तमूल्याः कौशाम्ब्यां दत्तमूल्याः । मूल्यं वेतनम् । कालवशान्मुहूर्तदुर्बलाः कालः समयः मुनिशापसमयः तद्वशात् तद्विधेयतया कञ्चित् कालं दुर्बलाः । मन्त्रियोगसमये समर्था इत्यर्थः । एवम्भूताः सुहृदो मां रक्षन्ति ।

**भो उम्मत्तअ! आणेहि मम मोदअमळ्ळअं । इमिणा पच्चएण उवज्झाअउळं गन्तव्वं ।**

भो उन्मत्तक! मे मोदकमल्लकं देहि । एतेन प्रत्ययेन खाद्यसाधनमोदकहेतुना उपाध्यायकुलं गन्तव्यं मया इति बाह्यार्थः । भो यौगन्धरायण! विविक्तदर्शनं देहि । प्रत्ययेन भवतः स्वाम्यभिप्रायविज्ञापनसमयेन । उपाध्यायः स्वामी । राजानमुपाध्यायमाहुः प्रजानां कृत्यनिर्वर्तकः अकृत्यनिवर्तकश्चेति । तस्य कुलं निलयो गन्तव्यमिति ।

**उन्मत्तकः—मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं ।**

मयाप्यमुना प्रत्ययेन मोदकहेतुना योजनशतं गन्तव्यम् । भो वसन्तक! अमुना गुप्तभाषणकार्यविज्ञानेन सह । योजनशतमिति बहुयोजनम् । योजनशतमित्यनेन कौशाम्बीनगरं संज्ञाप्यते । (इमिणेतीदृशं शब्दस्य गुणादेशः इणस्यादितमेतत् किं यत्तत् ष्ट इति हवेति भोजवचनविधिना दिणणादेशः ?) पच्चएणेति प्रत्ययेन प्रतियानेन । प्रत्ययशब्दः प्रतियाने वर्तते । श्वोऽमुना प्रतियानेनास्माकं नगरं गन्तव्यमित्यर्थः ।

**विदूषकः—किं एळावणे तुवं ।**

ऐरावतस्य पर्याय ऐरावणः । किमैरावतस्त्वम् । अनेकयोजनातिक्रमणसामर्थ्योऽस्त्यैरावत(स्य ? स्स) त्वमिति तद्वत् समर्थोऽसि किमिति बाह्यार्थः । आ, अनेना(ना)गताद्धि स्वामिनं रिपुवशगतमादाय गन्तुं त्वं शक्त इत्यर्थः ।

**उन्मत्तकः— आम, एळावणे अहं । ण दु दाव**

**देवळाजो मं आशणं आळुहदि । शुदं च मए पादपाशिएहि इन्दे वज्झाति धाराणिअळेहि विज्जुम्मयीहि कशाहि ताळिअ वाउब्भामेण परिब्भमन्तेण भिन्दीआदि भेहबन्धणं ।**

बहुध्वगमनशक्तोऽहं सामाद्युपायैः कर्म कर्तुं समर्थोऽस्मि । न तु तावद् देवराजो मामासनं कृत्वारोहति । न तु तावदिति । तुनिपातोऽत्र विशेषपक्षाद् व्यावृत्तौ । देवराज इति । देवः स्वामी राजा यः स तथोक्तः । मामिति । मत्प्रयासकृतकर्म तस्य राज्ञो मतिर्ना(व?)रोहति । तावन्निपातोऽत्रावधौ । स्वामिनो मतिर्मत्कर्मानुसरति अपसरति वेति मयाज्ञातं याव(त् ताव)न्न समर्थः । सति ज्ञाते (तावत्?) समर्थ इत्यर्थः । आ, अन्यार्थव्यवहारात् स्वा(र्थ(पराभिज्ञया?)परैरभि ज्ञायेतेति शङ्कया केवलं मौ(क्तिक?व्य)मवलम्ब्याघटमानमाह सर्वेषां (स्वं) भ्रान्तं ज्ञापयितुं प्रस्तुतं देवराजमधि—किन्तु मया श्रुतं च पादपाशिकैर्धारानिगलैर्यन्त्रितैरिन्द्रो बद्धः विद्युन्मयीभिरभिताड्य वातोद्भ्रमणेन परिभ्रमणेन मेघबन्धनं भेद्यते ।

**विदूषकः—भो उम्मत्तअ! ण तुवं दइस्सिसि । विळविस्सं दाव अहं ।**

भो उन्मत्तक! मम मोदकमल्लकं न दास्यसि, तर्हि तस्य रुमण्वत अस्मदागमनं रुदितव्यपदेशेन निवेदयिष्येऽहमित्यर्थः ।

**उन्मत्तकः—विळव विळव विक्रोश वा विळव विक्रोश विक्रोश वा ।**

विलपेति । रुमण्वदागमनेऽत्यभिनिवेशितया पुनः पुनराह—विलप विलपेति । विलापः परिदेवनम् । अथवा विक्रोश वा । 'क्रुश आह्वाने च' इति धात्वर्थविधानाद् विक्रोशं कुर्वाह्वानं कुर्विति भावः ।

**विदूषकः— अब्बम्हण्णं भो! ।**

अब्राह्मण्यं भोः! । अब्राह्मण्यम् अधर्म इत्यर्थः ।

**उन्मत्तकः—अहं पि विळविस्सं इन्दे वज्झे भो! इन्दे वज्झे भो!**

अहमपि विलपिष्यामि । पूर्वप्रस्तुतमिन्द्रग्रहणमधिकृत्येन्द्रो बद्ध इति निजागमननिवेदनं करोमीति भावः । (**अब्बह्मण्णं अब्बह्मण्णं?**)

(नेपथ्ये)

**मा भाआहि मा भाआहि बम्हणाउस! मा भाआहि ।**

हे ब्राह्मणोपासक! मा भैषीः ।

तेनोक्तवचनद्वारा उक्तिं प्रयुज्यमान आह—

**आयादे हि चन्दे शमाअदाणि सव्वणक्खत्ताणि । अधं बम्हणभावं । ईहामत्तेण शमणएण अभअं दीअदि ।**

ततो नेपथ्यश्रवणादाह—धिग् ब्राह्मणभावम् । चेष्टामात्रेणेति । चेष्टा क्रिया कर्म, मात्रा परिच्छेदनम्, आत्ममिथ्यात्वं (विवक्षितेन?) वक्तुमिच्छतेति भावः । ब्राह्मणभावमिति ब्राह्मण्यम् । अथवा भावशब्दो जन्मनि च वर्तते । ब्राह्मणानां जन्म (जननमिति?) धिगिति वा (पाठः?) । अद्य द्विजातिमात्रमपि न हितं ज्ञातम् । (अन्यबाह्यगमनार्थः । समर्थकस्यार्हतापशदस्यादिति?) निकृष्टवृत्तेः अभयप्रदानाद् । इत आरभ्य 'पुव्वह्ले वि दाव अयं देसो सुण्णो भविस्सदि' इत्यवसानादेकस्यैकोऽर्थः । (किमस्य हेतुमध्याह्नपूरणमेवासाध्यं तस्माद्?) अत आरभ्य एवं द्विविधोऽर्थः ।

**सो पि समिद्धो होदु ।**

सोऽपि समृद्धो भवत्वित्यत्र स उदयनः समृद्ध इति । अधिका ऋद्धिः वासवदत्ताप्राप्तिः । सा तस्य भवत्वित्यर्थः ।

**जाव अहं पि इमाणि दक्खिणामासआणि मग्गगेहे णिक्खिविअ गच्छामि । एकस्स साडिआए कग्गं अवरस्स मूळेण ।**

यावदहमपि । यावच्छब्दोऽवधारणेऽर्थे । दक्षिणामाषकाणि इमानि मार्गगृहे निक्षिप्य गच्छामि । मार्गगृहं चत्वरम् । दक्षिणामाषकाणि चामुण्डीमन्दिरे भुक्तदक्षिणाहृतानि माषमात्रकनकविरचितानि चत्वरे निक्षिप्य यास्यामीति बाह्यार्थः । आभ्यन्तरार्थः । दक्षिणामाषकाणि कारास्थमहीक्षितोक्तानि । मार्गगृहे मार्गाणामुपायानां गृहभूते मन्त्रियौगन्धरायणे विज्ञाप्य पश्चात् स्वस्थचित्त उद्दिष्टदेशं गमिष्यामीत्यर्थः । अथ कार्यदौर्घट्यं विचिन्त्याह — एकस्य शाटिकया कार्यमपरस्य मूल्येनेति । एकः प्रधानो राजा उदयनः । शाटिकयेति शाटिकासंज्ञया वासवदत्ता निर्दिश्यते । तया कार्यं राज्ञः प्रयोजनम् । अपरस्य मूल्येन प्रयोजनम् । अपरो यौगन्धरायणः, तस्य मूल्येन स्वामिमोक्षणेति ।

मन्त्राङ्कव्याख्यानं समाप्तम् ।

---

Appendix II.

# पाठभेदः ।

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| १ | ९ | (प....) आ | आ |
| ,, | १२ | ततस्तव | तव |
| २ | २ | णे णा | णे मम णा |
| ,, | ,, | अस्सत्थं विअ दि | अणत्थं दि |
| ,, | ४ | पेक्खिदुं | पेसिदुं |
| ३ | ३ | न् यस्य सहार्थः | नस्य सौहार्दम् |
| ,, | ९ | नात् त्रिषु गहनेषु ना | ने त्रिष्वहान्यतीत्य ना |
| ,, | १६ | णः— विजये! त्व | णः — त्व |
| ४ | ६ | रुप | रुपा |
| ,, | ८ | व्य | अहो व्य |
| ,, | १४ | ळेहो खु अअं | अय्य! ळेहो |
| ,, | ,, | सव्वबहूजणहत्था(दो) | बहुजणहत्थादो |
| ,, | १७ | नहस्तप्र | नप्र |
| ५ | ३ | (प्रविश्य) | (ततः प्रविशाति |
| ,, | ४ | स्स ।........ अय्य! | स्स । अय्य! |
| ,, | ६ | ओविट्ठिइओ | उवज्झाओ |
| ,, | ८ | णः— कथं हं | णः— हं |
| ,, | १४ | नः । कुतः, य | नः । य |
| ६ | ९ | णः— हन्त नि | णः— कथं गत इति। हन्त भोः नि |
| ,, | १० | शा, अ | शा । अथवा अ |
| ७ | २ | विण्णा | पडिण्णा |

| पृष्ठं | पाङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| ७ | ३ | तः स्वामी । ह | तः । ह |
| ,, | १२ | रो भ | रो भवे भ |
| ,, | १३ | सो भवे । | सो । |
| ८ | ५ | मदअ(णी?न्ती)ए | पदकण्ठीए |
| ,, | ८ | कः— तदो इ | कः— इ |
| ,, | ९ | अं | गं |
| ,, | १० | ङ्कु | रु |
| ,, | १६ | रं एव्व उ | रं उ |
| ९ | ३ | स्ती मया ह | स्ती ह |
| ,, | ५ | हं पडिण्णादं खु अ | कहं पडिण्णादं अ |
| ,, | १३ | णः —अथ कथमुपे | णः— अथोपे |
| १० | १ | क्तः स्वामी रु | क्तो रु |
| ,, | ७ | च्छामि | च्छति |
| ,, | ११ | पआदो | आअदो |
| ११ | २ | विणिक्खि | पडिक्खि |
| ,, | ४ | णः—........ अ | णः—अ |
| ,, | ७ | तदो ए | पिट्ठदो ए |
| १२ | १३ | रणिपडिअतु | रपरिब्भट्टप्पहरणो णावपाडितु |
| १३ | १५ | भादा हदो, अणेण मम पिदा अणेण मम सुदो | भादा, मम पिदा, मम सुदो |
| ,, | १७ | पावा ।........अ | पावा । अ |
| १४ | ५ | सङ्को | विक्खो |
| १९ | २ | दो भ | दो पदिदो वि सा ते भ |
| ,, | ६ | दो त | दो तेण अय्येण त |
| ,, | ७ | णादो तेण मो | णादो मो |
| ,, | १३ | त्ति ब | त्ति भणिअ ब |
| ,, | १५ | णः—........ए | णः — ए |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| १६ | ८ | प्रतीहारी | विजआ |
| ,, | १५ | णः— ........स्था | णः —स्था |
| १७ | ७ | एवमि | ईदृशमि |
| १८ | ४ | कः—अय्य! व | कः—व |
| ,, | १० | कं | यं |
| ,, | १५ | न्ध । यौ | न्धराअणं (इत्यर्धोक्ते तिष्ठति) । यौ |
| १९ | ४ | मतिक्रम्यै | मपोह्यै |
| ,, | ७ | णः—तेन हि अ | णः—अ |
| ,, | १० | मी, रि | मी। कुतः, रि |
| २० | ६ | प्रतीहारी—अय्य ! भट्टिमादा । | विजया—हा हा भट्टा। |
| ,, | ८ | ह । | ह भट्टिमादा। |
| ,, | ९ | ति । | ति किमिति । |
| ,, | १० | एवंविहस्स | एवं भवदो |
| २१ | १२ | स्तो.... न्द्रमा इव | स्तं....न्द्रमिव |
| ,, | १३ | यामि | यिप्यामि |
| २२ | ३ | अं खु | ओ खु |
| ,, | ४ | तदो...................यौ | तदो वणसकाळं तेण उम्मत्तभओ भविस्सदि। यौ |
| ,, | ७ | गृहीता | वृता |
| ,, | ८ | रो भ | रः पूर्वमविज्ञा भ |
| ,, | १४ | कथम | कथं कथम |
| २३ | ११ | ह । | ह । (निष्क्रान्ता) |
| ,, | १७ | न्तौ) | न्तः) |
| २४ | ६ | मिव | मुप |
| ,, | ८ | खलु | च |
| ,, | ९ | पि प्र | पि जतुं प्र |
| ,, | ,, | न चाप्य | नाप्य |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| २४ | १० | दैवमत्र क | दैवतमत्र प्रमाणं क |
| ,, | ,, | नेऽधिकृतम्। कुतः, व्य | नेनाधिकृतम्। व्य |
| ,, | ११ | तस्य | दूतो |
| ,, | १२ | दूतो | राज्ञो |
| ,, | ,, | त्वेऽवहितोऽपि तस्य | त्वे विहिता हि यस्य |
| ,, | १४ | क्षः | क्ष्यः |
| ,, | १५ | सतीयमानान्तःपुरचरः स | संलायमानान्तःपुरस |
| ,, | १६ | नः। य एषः, दू | नः। दू |
| ,, | १७ | प्ररोहैः | प्रदीपैः |
| ,, | १८ | पीता | पीना |
| २६ | ४ | लं प | लमल प |
| ,, | ,, | णो ह्येष वि | णो वि |
| ,, | १० | जा— .... .... कु | जा—कु |
| ,, | २० | त्तिः पितुः प्रयत्नः(?) | त् पितुः प्रयत्नेन(?) |
| २७ | १० | (ततः .... ....) | (प्रविष्टा देवी चेटी च) |
| २८ | ३ | केण वि किळ | अगणेण वि |
| ,, | ,, | कञ्चणमाळं | अत्ताणं |
| ,, | ४ | न्ति पेक्खिअ सि | न्ति विअ सि |
| ,, | ६ | णं वि किं वि वि | णं खु सा वि |
| ,, | ,, | मा ह्मि। | मा। |
| ,, | ७ | ति। | ति किमिति। |
| ,, | १२ | रुध्य | गृह्य |
| २९ | ३ | जा—अ | जा—अत्रापि, अ |
| ,, | ७ | चापरः का | च का |
| ,, | ८ | अश्रुपूर्वाभ्याकु | श्रुतपूर्वा व्याकु |
| ,, | १० | श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता रा | देवि! श्रूयतामस्मत्सम्बन्धप्रयोक्तारो रा |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
| --- | --- | --- | --- |
| २९ | १३ | महान् | बलवान् |
| ३० | ६ | तः । | तः पतितः । |
| ,, | ७ | नमिति । | नम् । |
| ,, | ८ | वी—....जे | वी—जे |
| ,, | ,, | णो । | णो । (उत्थिता) |
| ,, | ९ | र्या हि देवी । आस्यताम् । | र्या । आस्यतामास्यताम् । |
| ,, | १६ | जः । | ज इति । |
| ३१ | १० | किं, व | किमर्थकिं, व |
| ,, | ११ | जा—अथ कि | जा—कि |
| ३२ | २ | द्धोऽस्मि ब्रा | द्धो ब्रा |
| ,, | ४ | जा—आ अ | जा—अ |
| ,, | ६ | तः ।................युक्तेन | तः । पुरुषजवातिशयेन |
| ,, | ८ | द्य वि | द्य मेऽप्रतिहतं शासनमद्य वि |
| ३३ | २ | कुमारविधिविशिष्टेन स-त्कारेण व | कुमारप्रत्युद्गमनप्रयुक्तसत्कारं ममौप-वाह्यविशिष्टो व |
| ,, | ११ | णि अ | णि मे अ |
| ,, | १२ | खु अहं ई | हु इ |
| ,, | ,, | जोग्गं | योहं |
| ,, | १३ | ह................न | हमीदृशं प्रियं न |
| ,, | १७ | णि स | णि मे स |
| ३४ | ४ | दो वा । | दो । |
| ,, | ६ | उस्सेंअअदि । | उस्साहेदि |
| ,, | ७ | उत्सेकय | उत्साहय |
| ,, | ८ | प्रविष्टः | प्रतिष्ठितः |
| ३६ | ३ | णेण भू | णे भू |
| ३७ | १० | अनाश्रयणीयः | गताश्रयः |
| ,, | ११ | कार्या प्रा | कां प्र |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः |
|---|---|---|---|
| ३८ | ६ | जा—........पू | जा—पू |
| ३९ | १२ | अहं । भो! | अहं । अविह |
| ४० | ३ | मि । ........तु | मि । तु |
| ,, | ११ | आ! हहह । | आ! । |
| ४१ | ४ | कः—भो उ | कः—उ |
| ४५ | ४ | खाइदाणि | खादिअमाणाणि |
| ४७ | ३ | आम भो! सु | आम सु |
| ,, | ११ | आम भो! दि | आम दि |
| ४८ | ५ | कः—........चि | कः—चि |
| ,, | ८ | कः—ह्रा | कः—आम भो! ह्रा |
| ,, | १० | कः—........ प | कः—प |
| ,, | ११ | णः—ए | णः—हन्त भोः! ए |
| ४९ | ९ | यः । ते | यः । ततस्ते |
| ५० | ४ | तारः । | तात्मस्मः । |
| ,, | ६ | किंकृ | का कृ |
| ,, | ७ | त्त | ण्ण |
| ५४ | ३ | दु । | दुं गमिस्सह । |
| ,, | १० | तं | तां |
| ,, | १४ | संचरंतो | संपादअंतो |
| ,, | १९ | तः । (निष्क्रम्य) उन्म | तः । स्वकार्यमनुष्ठीयताम् । उभौ—तह । (निष्क्रान्तौ) उन्म |
| ५५ | २ | हू । मु | हू । अवि जाणाशि चंदे गहीदाचि । मु |
| ,, | ४ | प्पहवीहिआअं । जा | प्पपीठिआए । जा |
| ५६ | ६ | किण्डिळसुण्डिगिणीए | कण्डिळसुण्डकिण्णए |
| ,, | १४ | स्सं । (निवृत्य स्थितः) त | स्सं । त |
| ५८ | ८ | टः—........रा | टः—जदा एत्थ रा |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| ६९ | २ | हिज्जउ | छज्जदु |
| ६१ | १० | अंघो जाणामि जाणामि | अंघो तक्केमि तक्केमि |
| ६२ | ८ | मि।....भटः—किं णु खु एदं। वाआर | मि । भटः—अप्पमत्ता होथ। पाकार |
| ६३ | १२ | देमि | दइस्सं |
| ,, | १३ | न्तः) प्र | न्तः) गात्रसेवकः—एते एते सुहृदः निरोधमुक्तकृष्णसर्पा इवेतस्ततो निर्धावन्ति। भो भो सुहृदः! शृण्वन्तु शृण्वन्तु भवन्तः—नवं शरावं सलिले सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्। तत् तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥ क्वनुखलु गतः खल्वार्ययौगन्धरायणः। (विलोक्य) अये अयमत्रभवानार्यो यौगन्धरायणः। य एषः, निशितविमलखड्गः संहृतोन्मत्तवेषः कनकरचितचर्मव्यग्रवामाग्रहस्तः। विरचितबहुचीरः पाण्डरावद्धपट्टः सतटिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः॥ अहो प्रतिभयमिदं युद्धम्। हत्वा गजान् सगजिनः सहयांश्च योधानक्षौहिणीमतिविगाह्य बलान्मुहूर्तम्। नागेन्द्रदन्तमुसलाहतभग्नबाहुर्भ्रष्टायुधोऽपि न निवृत्तपदोऽभियातः॥ हा धिग् ग्रहणमुपगतः खल्वार्ययौगन्धरायणः। यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि। (निष्क्रान्तः) प्र |
| ६४ | १ | णह | णसि |
| ,, | ७ | णह | णसि |

| पृष्ठं | पङ्क्तिः | मुद्रितपुस्तकपाठः. | ख. पुस्तकादृष्टो ग. पुस्तकपाठः. |
|---|---|---|---|
| ६४ | ७ | सुणन्तु अय्या! । अय्यजो | सुणाहि दाव । अय्यजो |
| ६५ | ८ | ले | लं |
| ६६ | २ | ससत्त्वा | समर्था |
| ,, | १० | वगी | पनी |
| ६८ | ३ | टः — अ | टः — अय्य! अ |
| ,, | १२ | निज | नृप |
| ,, | १३ | परिभाषे | परपक्षे |
| ,, | १४ | त्रं | त्र |
| ६९ | ९ | इत्यश | इत्येतान्यश |
| ,, | ११ | तु माम् | तु भवान् माम् |
| ७० | ४ | भोः! य | भो यौगन्धरायण! य |
| ,, | ७ | मा मा भवानेवम् । | शान्तं शान्तं पापम् । |
| ७१ | १६ | कथा | व्यथा |
| ७२ | ३ | कृतं त्व | हृतं म |
| ,, | ११ | ते)........को | ते) को |
| ,, | १४ | निः ॥ भोः! | निः ॥ भरतरोहकः — भोः! |
| ,, | १८ | हः ।........ चित्र | हः । तयोश्चित्र |
| ,, | २० | ताम् | ते |
| ७३ | २ | नः । तेन ह्यानी | नः । आनी |

Appendix III.

---

# कथावस्तुसंक्षेपः ।

---

गजमृगयाचापलान्नागवनं गतो वत्सराजस्तं वञ्चनया कन्यार्थे स्वपुरमानिनीषोः प्रद्योतस्य चोदनया तन्मन्त्रिसालङ्कायनेन तत्र स्थापितं कपटगजं परमार्थहस्तिनं मत्वा वीणागानेन तं वशीकर्तुं यतमानो झटिति युद्धाय प्रत्युद्गतेषु कपटहस्त्यधिष्ठातृषु परयोधेषु प्रविश्यैजायमानोऽप्येकाकित्वात् तैर्बहुभिर्बलवद् बद्ध्वा प्रहृतः सालङ्कायनेन मोचितोज्जीवितः प्रद्योताय समर्पितः । प्रद्योतश्च तस्य घोषवतीं नाम वीणारत्नं स्वकन्यायै दत्त्वा तमन्तःपुरेऽवरुरोध । कदाचिदुपनतेन दर्शनेनान्योन्यं प्रत्युपजातानुरागौ वासवदत्तावत्सराजौ प्रच्छन्नं दाम्पत्यं प्रतिपद्य तत्र सुखमनुभवन्तौ स्थितौ । अथ वत्सराजमन्त्री यौगन्धरायणश्चारमुखविदितप्रद्योतच्छलवार्ताप्रेषणात् प्रागेव स्वामिनो नागवनगमनं परकृतधर्षणं च श्रुत्वा विषण्णः पश्चात् तस्य शत्रुपुत्रीसम्भोगलाभमात्रनिर्वृतत्वश्रवणेन विषण्णतरः वत्सराजस्य घोषवत्याश्च वासवदत्तया सह प्रत्यानयनं प्रतिजज्ञे । ततः स गूढरूपैः स्वपुरुषैः कर्मक्षमैर्न केवलं प्रद्योतस्यान्तःपुरं, यावत् सर्वामपि नगरीं व्यापयाम्बभूव । स्वयं चोन्मत्तवेष उज्जयिन्यां परिभ्रमन् काले सर्वान् स्वपुरुषान् युद्धाय सन्नाह्य स्वदत्तसमयानुरोधेन स्वामिनि वासवदत्तया सह करेणुं भद्रवतीमधिरुह्य उज्जयिन्या निर्गते शत्रुभिर्युध्यमान एव परिवार्य गृहीतः । अथ तदीयनीतिप्रयोगनैपुणीमभिनन्दता प्रद्योतेन स्वकन्यानुरूपवरलाभप्रीतेन वत्सराजमन्त्री यौगन्धरायणः सत्कृत्य कौशाम्बीं प्रेषितः ।

तदेतद् यौगन्धरायणस्य लोकोत्तरं नीतिप्रयोगकौशलमेव वत्सराजेन प्रतिनन्द्यते —

"मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥" (स्वप्न. अङ्क. ६. श्लो. १८)

---

Appendix IV.

---

# श्लोकानुक्रमणिका ।

---

## Appendix IV.